कथाविरामः कर्तव्यो मध्याह्ने घटिकाद्वयम् । तत्कथामनु कार्यं वै कीर्तनं वैष्णवैस्तदा ॥ ३९ ॥
मलमूत्रजयार्थं हि लघ्वाहारः सुखावहः । हविष्यान्नेन कर्तव्यो ह्येकवारं कथार्थिना ॥ ४० ॥
उपोष्य सप्तरात्रं वै शक्तिश्चेच्छृणुयात्तदा । घृतपानं पयःपानं कृत्वा वै शृणुयात्सुखम् ॥ ४१ ॥
फलाहारेण वा श्राव्यमेकभुक्तेन वा पुनः । सुखसाध्यं भवेद्यत्तु कर्तव्यं श्रवणाय तत् ॥ ४२ ॥
भोजनं तु वरं मन्ये कथाश्रवणकारकम् । नोपवासो वरः प्रोक्तः कथाविघ्नकरो यदि ॥ ४३ ॥
सप्ताहव्रतिनां पुंसां नियमाञ्छृणु नारद । विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे ॥ ४४ ॥
ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम् । कथासमाप्तौ भुक्तिं च कुर्यान्नित्यं कथाव्रती ॥ ४५ ॥
द्विदलं मधु तैलं च गरिष्ठान्नं तथैव च । भावदुष्टं पर्युषितं जह्यान्नित्यं कथाव्रती ॥ ४६ ॥
वृंताकं च कलंजं च दग्धमन्नं मसूरिका । निष्पावाद्यामिषं चैव वर्जयेद्यः कथाव्रती ॥ ४७ ॥
पलांडुं लशुनं हिंगुं मूलकं गृंजनं तथा । नालिकामूलकूष्मांडं नैवाद्याद्यः कथाव्रती ॥ ४८ ॥
द्विपाचितं सूतकान्नं भूमिजं लवणं तथा । मत्स्यमांसमजादुग्धं पल्वलोदं च वर्जयेत् ॥ ४९ ॥

सुखाय ।" इति ॥ ३८ ॥ मध्याह्ने मुहूर्त्तं विश्रमणीयमित्याह—कथेति । मध्याह्ने दिनार्द्धे घटिकाद्वयं मुहूर्त्तं यावत्कथाविरामः कथोपरतिर्यदा कर्त्तव्यः तत्कथामनु सा चासौ कथा च तत्कथा तामनु तस्याः पश्चात् तदा तस्मिन्काले वैष्णवैर्भक्तैः कीर्त्तनं हरिलीलागायनं कार्यम् ॥ ३९ ॥ श्रोतॄणां भोजनादिनियममाह—मलेति । मलं विष्ठा 'पुरीषं च मलं विष्ठा' इत्यागमात् । मूत्रं पीतजलपरिणामजं, तयोर्जयार्थं वशीकरणाय लघ्वाहारोऽल्पं भोजनं सुखावहः सुखप्रापकः । कथाम् अर्थितुं शीलं यस्य स तथा तेन श्रोता हविष्यान्नेन तंडुलश्यामाकादिना एकवारं यथा स्यात्तथा आहारः कर्त्तव्यः ॥ ४० ॥ शक्तिविशेषे भुक्तविशेषमाह—उपोष्येति । चेत् यदा शक्तिः स्यात्तदा सप्तरात्रमुपोष्य उपवासं कृत्वा शृणुयात्, घृतस्य पानं कृत्वा, पयसो दुग्धस्य वा पानं कृत्वा सुखं यथा स्यात्तथा शृणुयात् । वै निश्चयेन ॥ ४१ ॥ किंच—फलाहारेण फलभक्षणेन श्राव्यं श्रोतुं योग्यं, पुनरेकभक्तेन सकृद्भोजनेन वा यत्तु भोजनं सुखसाध्यं भवेत् तच्छ्रवणाय श्रवणार्थं कर्त्तव्यम् ॥ ४२ ॥ उपवासद्वारा भुक्तिरित्याह—भोजनमिति । सूतोक्तिरियमिति केचित् । वस्तुतस्तु—सनकाद्यन्यतमोक्तिः, पूर्वोक्तव्यवस्थायां प्रवचन एकस्यैवाधिकारात् । यतः कथाश्रवणकारकं कथायाः श्रवणं कथाश्रवणं तस्य कारकं कारणमतो भोजनमेव वरं श्रेष्ठमहं मन्ये । यदि कथाविघ्नकरः कथायां विघ्नहेतुस्तदोपवासो वरः श्रेष्ठो न प्रोक्तः ॥ ४३ ॥ सप्ताहव्रतिनां नियमानाह—सप्ताहेति द्वाभ्याम् । हे नारद सप्ताहं व्रतमस्ति येषामिति सप्ताहव्रतिनस्तेषां पुंसां नियमान् शृणु । विष्णोर्या दीक्षा तया विहीना रहिता विष्णुदीक्षाविहीनास्तेषां कथाश्रवे कथायाः श्रवणे नाधिकारः अधिकारो नास्ति ॥ ४४ ॥ कथाव्रती पुमान् ब्रह्मचर्यं स्त्रीसंसर्गाद्यनाचरणम् अधःसुप्तिं भूमौ शय्यां च पुनः पत्रावल्यां भोजनम् । तत्रापि तुशब्दो विशेषं सूचयति ॥ ४५ ॥ वर्जनीयान्याह—द्विदलमिति सप्तभिः । द्विदलं चणकादि । तदुक्तम्—"माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः । निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् ॥" । अन्यच्च—"नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत्" इति स्कांदे । अन्यच्च—"शिलायां भिद्यमानस्य द्विदलं जायते यदि । तदेव द्विदलं धान्यं व्रतादौ च विवर्जयेत् ॥" इति । मधु क्षौद्रं, तैलं तिलादीनाम्, गरिष्ठान्नं तैलगुडमिश्रितमन्नम्, भावदुष्टं मनसा दूषितम्, पर्युषितं पूर्वेद्युः पाचितं कथाव्रती नित्यं जह्यात् त्यजेत् ॥ ४६ ॥ वृंताकम् "वार्त्ताकी हिंगुली सिंही भंटाकी दुष्प्रधर्षिणी" इति कोशोक्तं (भांटा) इति प्रसिद्धम् । कलंजं लंबायमानफलविशेष इति केचित्—"विषलिप्तेन बाणेन यौ हतौ मृगपक्षिणौ । तौ कलंजाविति ख्यातौ तद्भक्षे चैंदवं व्रतम् ॥" इति गुरवः । दग्धमन्नमग्निना ज्वलितमन्नम्, मसूरिका प्रसिद्धा । निष्पावः—"निष्पावः शूकशिंबिः स्याद्बलकः श्वेतशिंबिकः" इति भावप्रकाशोक्तः । भाषायाम् 'शाम्मचुला', तदादि । आमिषं मांसं चेति । शेषं पूर्ववत् ॥ ४७ ॥ 'पलांडुस्तु सुकंदकः' इत्यमरोक्तः । लशुनम्—"लशुनस्तु रसोनः स्यादुग्रगंधो महौषधम्" इति भावप्रकाशे हिंगु रामठम् । मूलकम्—"मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम् । शालामर्कटकं विस्रं शालेयं मरुसंभवे ॥ चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका । नैपालमूलकं चान्यद्भवेत्कुंजरदंतवत् ॥" इति । तत्रैव—"मंगल्यश्च मसूरः स्यान्मंगल्या च मसूरिका" इति । गृंजनम्—"गाजरं गृंजनं प्रोक्तं तथा नारंगवर्णकम्" इति । तथा नलिका—"नालिका कालशाकं च श्राद्धशाकं च कालकम्" इति । मूलं रक्तकंदविशेषः । कूष्मांडः—"कूष्मांडः स्यात्पुष्पफलं पीतपुष्पबृहत्फलम्" तत्र समाहारैकत्वम्, तद्वर्जयेत् ॥ ४८ ॥ द्विवारं पाचितम् । यस्य सूतकं भवेत्तस्यान्नम् । तथा तेनैव प्रकारेण भूमिजं लवणम् । मत्स्यं मांसम् अजायाश्छाग्या दुग्धम् च पुनः पल्वलोऽल्पजलाशयस्तस्य उदकं वर्जयेत् । "तद्भक्षणे तु दोषः स्याद् बृहत्या न स्मरेद्धरिम् । पटोले तु न वृद्धिः

कामं क्रोधं मदं मानं मत्सरं लोभमेव च । दम्भं मोहं तथा द्वेषं दूरयेच्च कथाव्रती ॥ ५० ॥
वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा । स्त्रीराजमहतां निन्दां वर्जयेद्यः कथाव्रती ॥ ५१ ॥
रजस्वलान्त्यजम्लेच्छपतितव्रातकैस्तथा । द्विजद्विड्वेदबाह्यैश्च न वदेद्यः कथाव्रती ॥ ५२ ॥
सत्यं शौचं दया मौनमार्जवं विनयं तथा । उदारमानसं तद्वदेवं कुर्यात्कथाव्रती ॥ ५३ ॥
दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्मवान् । अनपत्यो मोक्षकामः शृणुयाच्च कथामिमाम् ॥ ५४ ॥
अपुष्पा काकवन्ध्या च वन्ध्या या च मृतार्भका । स्रवद्गर्भा च या नारी तया श्राव्या प्रयत्नतः ॥ ५५ ॥
एतेन विधिना श्रावे तदक्षय्यतरं भवेत् । अत्युत्तमा कथा दिव्या कोटियज्ञफलप्रदा ॥ ५६ ॥
एवं कृत्वा व्रतविधिमुद्यापनमथाचरेत् । जन्माष्टमीव्रतमिव कर्तव्यं फलकाङ्क्षिभिः ॥ ५७ ॥
अकिंचनेषु भक्तेषु प्रायो नोद्यापनाग्रहः । श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः ॥ ५८ ॥
एवं नगाहयज्ञेऽस्मिन्समाप्ते श्रोतृभिस्तदा । पुस्तकस्य च वक्तुश्च पूजा कार्यातिभक्तितः ॥ ५९ ॥
प्रसादतुलसीमालाः श्रोतृभ्यश्चाथ दीयताम् । मृदङ्गतालललितं कर्तव्यं कीर्तनं ततः ॥ ६० ॥

स्याद् बलहानिश्च मूलके ॥ कलंकी जायते बिल्वे तिर्यग्योनिश्च निंबके । कांस्ये शरीरनाशः स्यान्नालिकायां तु मूर्खता । तुंबी गोमांसतुल्या स्याद्गोवधः स्यात्कलिंजके । शिंबिः पापकरा प्रोक्ता पूतिका ब्रह्मघातिका । वृंताके सुतनाशः स्याच्चिररोगी तु मांसके ॥" इति । अनुक्तानां चशब्देन ग्रहणात्तदनुक्तिर्न दोषायेति ॥ ४९ ॥ काममभिलाषम् । क्रोधं रजोगुणेन मनःक्षोभम्, इष्टविघातजं वा । मदं गर्वम् । मानमहंकारम्, सर्वोत्तमत्वं वा । मत्सरं परोत्कर्षासहनम् । लोभं बहुधनापेक्षत्वम् । दंभं लोकानुरंजनाय कर्मानुष्ठानम् । तथा तेनैव प्रकारेण मोहं ममतारूपम् । च पुनः कथाव्रती द्वेषं विरोधं दूरयेत् त्यजेत् । एव चेति-स्पष्टमित्यर्थः ॥ ५० ॥ वेदवैष्णवविप्राणां वेदा ऋगाद्याः, वैष्णवा नारदाद्या भक्ताः, विप्रा ब्राह्मणास्तेषाम् । तथा गुरुगोव्रतिनां गुरुर्हितोपदेष्टा, गौः प्रसिद्धा, तयोर्व्रतमस्त्येषामिति तथा तेषाम् । स्त्रीराजमहतां स्त्री पतिव्रता नारी, राजा देशपतिः, महान् पूज्यः योगतपःप्रभावतोऽर्चनीयस्तेषां निंदां यः कथाव्रती स वर्जयेत् ॥ ५१ ॥ रजस्वलां रजोयुक्तां स्त्रीं त्यजेत्, तथा म्लेच्छपतितव्रातकैः म्लेच्छा चांडालादयः, पतिता गोब्रह्मघ्नादयः व्रातकाः संस्कारहीनास्तैः सह, द्विजद्विट् ब्राह्मणद्वेषी, वेदबाह्या जैना लौकायतिका वा नास्तिकास्तैः सार्द्धमपि यः कथाव्रती स न वदेत् संभाषणं न कुर्यात् ॥ ५२ ॥ पुनर्नियमानाह-सत्यमिति । कथाव्रती सत्यं कुर्यात् धातोरनेकार्थत्वात् वदेत् । शौचं शुद्धिम् । दयां दीनेषु । मौनं मितभाषणम् । आर्जवम् ऋजोर्भावं सरलताम् । तथा विनयं नम्रताम् । तद्वत्तथैव उदारमानसं चित्तमुदारं कुर्यात् । एवमिति शुभगुणग्रहणं सूचयति ॥ ५० ॥ यैरवश्यं कथा श्रोतव्या तान्निर्दिशति-दरिद्रो मंदभाग्यः । च पुनः क्षयी क्षयरोगी । निर्भाग्यः भाग्यहीनः पापकर्मवान् पापिष्ठः । अनपत्यः संतानहीनः । मोक्षकामः मोक्षार्थी च इमां कथां शृणुयात् ॥ ५४ ॥ याभिः स्त्रीभिः श्रोतव्या ता आह-अपुष्पेति । अपुष्पा अरजस्का । काकवंध्या सकृत्प्रसूता । च पुनः वंध्या सामान्यपुत्राभाववती । या च मृतार्भका मृताऽपत्या । च पुनः स्रवद्गर्भा गलितगर्भा या नारी स्त्री तया प्रयत्नतोऽतियत्नात् श्राव्या श्रोतुं योग्या । इयं कथेति शेषः ॥ ५५ ॥ विधानतः श्रावे फलं स्यादित्याह-एतेनेति । एतेनोक्तेन विधिना श्रावे श्रवणे कृते सति तच्छ्रवणमक्षय्यतरम् अनंतं भवेत् । इयं कथा दिव्या ईश्वरप्रणीतत्वादत्युत्तमा सर्वतीर्थयज्ञादेः श्रेष्ठा । तत्र हेतुः-कोटियज्ञफलप्रदा कोटियज्ञानां फलं प्रददातीति तथा ॥ ५६ ॥ उद्यापनमंतरा संपादितव्रतस्य फलमपूर्णमतस्तदुद्यापनं कर्तव्यमित्याह-एवमिति । एवममुना प्रकारेण व्रतविधिं व्रतस्य विधानमादौ कृत्वाऽथानंतरं पश्चादुद्यापनमाचरेत्कुर्यात् । किमिव-जन्माष्टमीव्रतमिव फलेप्सुभिः कर्तव्यम् ॥ ५७ ॥ गृहस्थविषयोऽयं विधिः, न तु विरक्तविषय इत्याह-अकिंचनेष्विति । न किंचन वस्तुमात्रं येषां तेऽकिंचनास्तेषु निष्परिग्रहेषु भक्तेषु हरिजनेषु उद्यापनस्याऽग्रहः प्रायो बाहुल्येन नास्ति । तत्र हेतुः-यतो वैष्णवा निष्कामास्ततस्ते श्रवणेनैव पूताः शुद्धाः ॥ ५८ ॥ समाप्तौ कर्तव्यमाह-एवमिति । एवमित्थम् अस्मिन्नगाहयज्ञे सप्ताहयज्ञे समाप्ते पूर्णे सति तदा श्रोतृभिः पुस्तकस्य शास्त्रस्य वक्तुर्वाचकस्य च अतिप्रेम्णा पूजा कार्या । तदुक्तं पाद्मे-"समाप्तेषु पुराणेषु शक्त्या तं तर्पयेन्नृप । वाचकः पूजितो येन प्रसन्नास्तस्य देवताः ॥ गोभूहिरण्यरजतं वासांसि विविधानि च । दीयते वाचकायैव यदीच्छेत्सफलं श्रुतम् । वाचके पूजिते चैव विष्णुर्भवति पूजितः । नारायणादिदेवाश्च वाचके निवसंति वै । यो व्यासरूपी कृष्णाग्रे कथां वै वाचयेत् सुधीः ॥ सर्वसौख्यमिह प्राप्य सोंते विष्णुपुरीं व्रजेत् । दर्शनात्पूजनात्स्पर्शान्नमस्कारात्स्तवादपि ॥ अश्वमेधसहस्रस्य फलं तेषां न दुर्लभम् । तस्मिन्नित्यं पूजिते हि हरिः पूज्यो हि वाचके । श्राद्धे यस्य द्विजो भुंक्ते वाचकः श्रद्ध यार्चितः ॥ भवंति पितरस्तस्य तृप्ता वर्षशतं नृप ।" इति ॥ ५९ ॥ ततः कर्तव्यमाह-प्रसादेति द्वाभ्याम् । प्रसादो मोदकादिः । तुलसी प्रसिद्धा । माला पुष्पादिस्रक् एताः श्रोतृभ्योऽथ दीयतां दीयन्तामित्यर्थः । ततस्तदनंतरं

जयशब्दान्नमःशब्दाञ्छङ्खशब्दांश्च कारयेत् । विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं च दीयताम् ॥ ६१ ॥
विरक्तश्चेद्भवेच्छ्रोता गीता वाच्या परेऽहनि । गृहस्थश्चेत्तदा होमः कर्तव्यः कर्मशान्तये ॥ ६२ ॥
प्रतिश्लोकं च जुहुयाद्विधिना दशमस्य च । पायसं मधु सर्पिश्च तिलान्नादिकसंयुतम् ॥ ६३ ॥
अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः । तन्मयत्वात्पुराणस्य परमस्य च तत्त्वतः ॥ ६४ ॥
होमाशक्तौ बुधो हौम्यं दद्यात्तत्फलसिद्धये । नानाछिद्रनिरोधार्थं न्यूनताधिकताख्ययोः ॥ ६५ ॥
दोषयोः प्रशमार्थं च पठेन्नामसहस्रकम् । तेन स्यात्सफलं सर्वं नास्त्यस्मादधिकं यतः ॥ ६६ ॥
द्वादश ब्राह्मणान्पश्चाद्भोजयेन्मधुपायसैः । दद्यात्सुवर्णं धेनुं च व्रतपूर्णत्वहेतवे ॥ ६७ ॥
शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च । तत्रास्य पुस्तकं स्थाप्यं लिखितं ललिताक्षरम् ॥ ६८ ॥
संपूज्यावाहनाद्यैस्तदुपचारैः सदक्षिणम् । वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने ॥ ६९ ॥
आचार्याय सुधीर्दत्त्वा मुक्तः स्याद्भवबन्धनैः । एवं कृते विधाने च सर्वपापनिवारणे ॥ ७० ॥

मृदंगतालललितं मृदंगेन तालेन ललितं मनोहरं कीर्त्तनं कर्त्तव्यम् ॥६०॥ जयशब्दान् जयेति वचनानि । नमःशब्दान् नमस्कारान् । च पुनः शंखशब्दान् शंखनादान् कारयेत् । विप्रेभ्यः च पुनः याचकेभ्यः भिक्षार्थिभ्यः वित्तं धनम् अन्नं च दीयताम् ॥ ६१ ॥ निष्कामसकामपरत्वेन समाप्तौ विशेषमाह—विरक्त इति । चेद्यदि विरक्तः कलत्राद्यसंसर्गी श्रोता भवेत्तदाऽपरेऽहनि गीता वाच्या वाचनीया । गृहस्थश्चेत्तर्हि कर्मशांतये कर्मणः शांत्यर्थं होमः कर्त्तव्यः ॥ ६२ ॥ तद्विधिमाह—प्रतिश्लोकमिति । प्रतिश्लोकं श्लोकं श्लोकं प्रति दशमस्य स्कंधस्य विधिना विधानतो जुहुयात् । विधानं तंत्र उक्तम् । यथा—"ब्रह्मस्तुतिं समुच्चार्य पूर्वार्द्धहवनं चरेत् । वेदस्तुतिं पठित्वादावुत्तरार्द्धाहुतिं चरेत् ॥ प्रत्यध्यायं समाप्तौ च मंत्राष्टकमुदीरयेत् ।" इति । ॐ विष्णवे नमः । ॐ नारायणाय नमः ॐ ब्रह्मणे नमः । ॐ शिवाय नमः । ॐ वासुदेवाय नमः । ॐ प्रद्युम्नाय नमः । ॐ अनिरुद्धाय नमः । ॐ संकर्षणाय नमः । इत्यष्टाहुतयो देयाः । पायसं पयसि श्रृतं तंडुलम् । मधु क्षौद्रम् । सर्पिर्गोघृतम् । च पुनः तिलान्नादिकसंयुतं तिलाः कृष्णतिलाः, अन्नं यवादिः आदिना शर्करादिग्रहः, तैः संयुतं जुहुयात् ॥ ६३ ॥ प्रकारांतरमाह—अथवा यद्वा सुसमाहित एकाग्रचित्तः सन् गायत्र्या गायत्रीमंत्रेण हवनं कुर्यात् । तत्र हेतुः—परमस्योत्कृष्टस्य पुराणस्य श्रीमद्भागवताख्यस्य तत्त्वतः तन्मयत्वात् गायत्रीस्वरूपत्वात् ॥ ६४ ॥ अशक्तश्चेत्थं कुर्यादित्याह—होमेति । होमाशक्तौ होमे अशक्तिरसामर्थ्यं तस्यां सत्यां बुधो विवेकी हौम्यं होमाय योग्यं द्रव्यं तत्फलसिद्धये होमफलनिष्पत्त्यर्थं दद्यात् । नानाछिद्राणि नानांतरायाः विघ्नरूपाः तेषां निरोधार्थं निरोधाय न्यूनताधिकताख्ययोः न्यूनता लिखितार्थस्य अपूर्णता, अधिकता मूलवचनप्रसङ्गादधिकान्यप्रसंगकथनं, ते आख्ये ययोरित्युत्तरश्लोकेनान्वेतव्यम् । हौम्यद्रव्याणि आश्वलायनसूत्रभाष्य उक्तानि । यथा—"पयो दधि यवागूश्च सर्पिरोदनतंडुलाः । सोमो मांसं तथा तैलमापो हौम्यं प्रकीर्त्तितम् ॥" इति । "कलौ निषेधान्मांसस्य तत्र देयं तु तद्विधम् । लवणं पयसा युक्तं मांसमित्युच्यते बुधैः ॥ पृथक् पृथक् तु तद्दद्यान्माहिष्यं माषसंयुतम् ।" इति । वस्तुतस्तु श्लोकोत्तरार्द्धे "तैलमापश्च सोमश्च व्रीहयश्च यवास्तिलाः" इति पाठो युक्तः । हरिनामतः सर्वं संपूर्णं स्यादित्याह—दोषयोरिति । न्यूनताधिकताख्ययोर्दोषयोः प्रशमार्थं निवृत्त्यर्थं च पुनः नामसहस्रकं विष्णोः सहस्रं नामानि पठेत् । तेन नामसहस्रपठनेन सर्वं सफलं स्यात् । अस्मात् हरिनाम्नः अधिकमन्यद्यतो यस्मात्कारणान्नास्ति । तदुक्तम्—"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥" इति वचनात् ॥ ६५–६६ ॥ होमांते ब्राह्मणभोजनं कर्त्तव्यमित्याह—द्वादश इति । पश्चात् होमानंतरं द्वादश रविसंख्याकान्ब्राह्मणान् मधुपायसैः मिष्टान्नादिभिर्भोजयेत् । व्रतपूर्णत्वहेतवे व्रतस्य समाप्त्यर्थं सुवर्णं कांचनं, धेनुं पयस्विनीं, चात्सवत्सां दद्यात् ॥ ६७ ॥ अतिधनाढ्ये श्रीमति च श्रोतरि कर्त्तव्यविशेषमाह—शक्ताविति चतुर्भिः । शक्तौ सामर्थ्ये सति पलत्रयमितम् 'स्वर्णं षोडशमाषकम्' इत्युक्त्या स्वर्णशब्दः षोडशमाषसंख्यावाचकः, 'पलं सुवर्णाश्चत्वारः' इति चतुष्षष्टिमाषात्मकं पलमित्युच्यते । तस्य त्रयं द्विनंदचंद्रमाषात्मकम् (१९२) । तन्मितं तत्प्रमाणं सिंहं सिंहासनं सिंहस्य प्राधान्यात्तन्निर्देशः । तदुक्तम्—"विजयो जयदो जेता रिपुहंता शुभंकरः । दुःखहा धर्मदः शांतः सर्वारिष्टविनाशकः ॥ एते वै संनिधौ यस्मात्तव सिंहा महाबलाः । तेन सिंहासनेति त्वं वेदैर्मंत्रैश्च गीयसे । त्वयि स्थितः शिवः शांतस्त्वयि सिंह सुरेश्वरः ॥ त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः । नमस्ते सर्वदो भद्र भद्रदो भव भूपतेः । त्रैलोक्यजयसर्वस्व सिंहासन नमोस्तु ते ।" इति । विधाय कृत्वा तत्र तस्मिन् सिंहासने अस्य श्रीमद्भागवतस्य ललिताक्षरं यथा स्यात्तथा लिखितं पुस्तकं स्थाप्यम् । 'ललिताक्षरैः' इत्यपि पाठः । एतेन सीसकशिलाक्षरैरंकितानां दानं परास्तमिति गुरवः ॥ ६८ ॥ आवाहनाद्यैः आवहनमाद्यं मुख्यं प्रधानं येषु ते तथा तैरुपचारैः षोडशभिस्तत्पुस्तकं संपूज्य वस्त्रभूषणगंधाद्यैः पूजिताय अर्चिताय यतात्मने यतो वशीकृत आत्मा मनो येन स तथा तस्मै ॥ ६९ ॥ आचार्याय ब्राह्मणाय सदक्षिणं दक्षिणायुतं दत्त्वा सुधीः सुबुद्धिमान् नरो मनुष्यः भवबंधनैः संसारबंधैर्मुक्तः स्यात् । एवंप्रकारेण

श्रीशुक उवाच—निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ८३ ॥
धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥८४॥
श्रीमद्भागवतं पुराणतिलकं यद्वैष्णवानां धनं यस्मिन्पारमहंस्यमेवममलं ज्ञानं परं गीयते ।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्प्रपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥८५॥
स्वर्गे सत्ये च कैलासे वैकुण्ठे नास्त्ययं रसः । अतः पिबत सद्भाग्या मा मा मुञ्चत कर्हिचित् ॥८६॥
सूत उवाच—एवं ब्रुवाणे सति बादरायणौ मध्ये सभाया हरिराविरासीत् ।
प्रह्लादबल्युद्धवफाल्गुनादिभिर्वृतः सुरर्षिस्तमपूजयच्च तान् ॥ ८७ ॥
दृष्ट्वा प्रसन्नं महदासने हरिं ते चक्रिरे कीर्तनमग्रतस्तदा ।
भवो भवान्या कमलासनस्तु तत्रागमत्कीर्तनदर्शनाय ॥ ८८ ॥

स्थितः महासनोपविष्टः शुकः अमलां शुद्धां गिरं वाचं यूयं संश्रृणुत इत्यवदत् ॥ ८२ ॥ "वेदवृक्षसमुद्भूतं श्रीमद्भागवतं फलम् । शुकमुखाद्गलितं भूमौ पिबंतु रसिका अहो ॥" इत्याह—निगमेति । निगमो वेदः स एव कल्पतरुः कल्पवृक्षस्तस्य फलं श्रीमद्भागवताख्यं रसं रसरूपं हेयांशहीनत्वात् । शुकमुखात् भुवि गलितं पृथिव्यां पतितम् , अमृतद्रवेण संयुतं, पक्षे अमृतस्य मोक्षस्य द्रवः प्रवाहस्तेन संयुतं, लयो मोक्षस्तमभिव्याप्य मुहुः पुनः पुनः यूयं पिबत, हे रसिकाः भावुकाः हे रसविशेषभावनानिपुणाः । अहो इति अलभ्यलाभं सूचयति ॥ ८३ ॥ "कर्मभक्तिज्ञानभेदाद्वेदाः काण्डत्रयात्मकाः । तेभ्यः श्रेष्ठतरा चेयं सुखमोक्षप्रदायिनी ॥" इत्याह–धर्म इति । अत्र श्रीमद्भागवते सतां सज्जनानां निर्मत्सराणां शांतानां परमो धर्मोऽस्ति । कीदृशः–प्रोज्झितकैतवः । प्रकर्षेण उज्झितं त्यक्तं कैतवं कपटं यस्मात्स तथा । 'अत्रपरम' इत्येकपदे अपगता त्रपा लज्जा येषां ते अपत्रपा नास्तिका धूर्त्ता वा तान्मते आकर्षतीति तथा धातूनामनेकार्थत्वात् । एतेन वेदबाह्यानामपि रुचिकरमिदं शास्त्रमिति कर्मकांडतः श्रेष्ठतोक्ता । अत्र वस्तु उपास्यं परमार्थरूपं तापत्रयोन्मूलनं तापत्रयम् उन्मूलयतीति तथा । अत एव शिवदं कल्याणप्रदमित्युपासनाकांडतोऽप्याधिक्यं सूचितम् । वास्तवं पारमार्थिकम् अविनाशि ब्रह्म वेद्यं ज्ञातुं योग्यमिति ज्ञानकांडतः श्रैष्ठ्यमुक्तम् । महामुनिकृते 'वेदव्यासो महामुनिः इति वचनान्महामुनिर्वेदव्यासः तेन कृते अत्र अस्मिञ्छ्रीमद्भागवते शास्त्रे शुश्रूषुभिः श्रोतुमिच्छद्भिः पुरुषैस्तत्क्षणादेव हृदि ईश्वर अवरुध्यते प्राप्यते । कृतिभिः पुण्यजनैः अपरैः शास्त्रैः सद्यः अवरुध्यते किं वा, अर्थान्नावरुध्यत इति कर्तृतोऽप्युत्कर्षः सूचितः ॥ ८४ ॥ पुराणोत्तमस्यैतस्य ज्ञानाद्याश्रयस्य श्रवणादितो मुक्तिर्भवतीत्याह—श्रीमदिति । श्रीमद्भागवतं पुराणतिलकं पुराणानां तिलकं शोभाकरं मुख्यमित्यर्थः । वैष्णवानां यदेव धनमस्ति । यस्मिन् शास्त्रे पारमहंस्यं परमहंसैः प्राप्यं "अहं ब्रह्मास्मि" इति महावाक्येनानुभूतम् अमलं शुद्धं परं ज्ञानं ब्रह्मात्मैक्यरूपं गीयते । यत्र यस्मिन् शास्त्रे ज्ञानविरागभक्तिसहितं नैष्कर्म्यम् ईश्वरार्पणेनांतःकरणशुद्धिद्वारा कर्मादीनां मोक्षसाधनत्वम् आविष्कृतं प्रकटीकृतम् । तच्छास्त्रं भक्त्या श्रृण्वन् प्रपठन् विचारणपरो भवन् नरो विमुच्यते विवेकेण मुक्तो भवति ॥ ८५ ॥ दुर्लभं रसं पातव्यमेवेत्याह—स्वर्ग इति । अयं कथामृतरसः स्वर्गे नास्ति । च पुनः सत्ये सत्यलोके नास्ति । कैलासे नास्ति । वैकुंठे नास्ति । अतोऽस्मात्कारणात् हे सद्भाग्या यूयं पिबत कर्हिचित् कदापि मा मुंचत मा मुंचत । वीप्सा हेयत्वनिरासार्था ॥ ८६ ॥ इति वदति शुके हरिरागत इत्याह—एवमिति । बादरायणौ बदरीणां समूहो तदयनं स्थानं यस्य स बादरायणो व्यासस्तस्यापत्यं बादरायणिः तस्मिन् बादरायणौ श्रीशुके एवं ब्रूवाणे इत्थं वदति सति सभाया मध्ये प्रह्लादबल्युद्धवफाल्गुनादिभिः प्रह्लादः प्रसिद्धः, बलिर्विरोचनपुत्रः, उद्धवो देवभागसुतः, फाल्गुनोऽर्जुनस्तदादिभिर्भक्तैर्वृतः संयुक्तो हरिः श्रीनारायण आविरासीत् प्रकटोभूत् । सुरर्षिर्नारदस्तं हरिं तान्प्रह्लादादींश्चापूजयत् ॥ ८७ ॥ तुष्टस्य हरेरग्रे कीर्तनं ते चक्रुरित्याह—दृष्ट्वेति । महदासने महासिंहासनोपरि स्थितं प्रसन्नं हरिं दृष्ट्वा तदा ते प्रह्लादादयस्तदग्रतः हरेः पुरतः कीर्त्तनं चक्रिरे "कीर्तनं मुनिभिः प्रोक्तं हरेर्लीलाप्रगायनम्" इति । भवान्या पार्वत्या सह भवो महादेवः तत्रागमत्तस्मिन्स्थान आगतः । कमलासनो ब्रह्मा तु अप्यर्थे । आगमत् । किमर्थम्–कीर्त्तनदर्शनाय कीर्त्तनदर्शनार्थम् ॥ ८८ ॥ कीर्तनेऽधिकारविशेषेण गायकवादकान्निरूपयति—प्रह्लाद इति द्वाभ्याम् । प्रह्लादः तालधारी तालं धर्तुं शीलमस्येति तथा च पुनः तरलगतितया शीघ्रगतित्वेन उद्धवः कांस्यधारी 'कांस्यतालादिकं घनम्' इत्यमरोक्तेझल्लर्यादिधारी सुरर्षिः नारदो वीणाधारी । स्वरकुशलतया स्वरे कुशलता नैपुण्यं तया रागकर्त्ताऽर्जुनः, ।

१. आत्माभाव आर्षः, महतामासमिति वा ।

प्रह्लादस्तालधारी तरलगतितया चोद्धवः कांस्यधारी
वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्ताऽर्जुनोऽभूत् ।
इन्द्रोऽवादीन्मृदंगं जयजयसुकराः कीर्तने ते कुमारा
यत्राग्रे भाववक्ता रसविरचनया व्यासपुत्रो बभूव ॥ ८९ ॥
ननर्त मध्ये त्रिकमेव तत्र भक्त्यादिकानां नटवत्सुतेजसाम् ।
अलौकिकं कीर्तनमेतदीक्ष्य हरिः प्रसन्नोऽपि वचोऽब्रवीत्तत् ॥ ९० ॥
मत्तो वरं भागवता वृणुध्वं प्रीतः कथाकीर्तनतोऽस्मि सांप्रतम् ।
श्रुत्वेति तद्वाक्यमतिप्रसन्नाः प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ९१ ॥
नगाहगाथासु च सर्वभक्तैरेभिस्त्वया भाव्यमतिप्रयत्नात् ।
मनोरथोऽयं परिपूरणीयस्तथेति चोक्त्वान्तरधीयताच्युतः ॥ ९२ ॥
ततोऽनमत्तच्चरणेषु नारदस्तथा शुकादीनपि तापसांश्च ।
अथ प्रहृष्टाः परिनष्टमोहाः सर्वे ययुः पीतकथामृतास्ते ॥ ९३ ॥
भक्तिः सुताभ्यां सह रक्षिता सा शास्त्रे स्वकीयेऽपि तदा शुकेन ।
अतो हरिर्भागवतस्य सेवनाच्चित्तं समायाति हि वैष्णवानाम् ॥ ९४ ॥
दारिद्र्यदुःखज्वरदाहितानां मायापिशाचीपरिमर्दितानाम् ।
संसारसिन्धौ परिपातितानां क्षेमाय वै भागवतं प्रगर्जति ॥ ९५ ॥

अभूदिति क्रिया सर्वत्रान्वेतव्या । इंद्रः मृदंगमवादीत् । यत्र कीर्त्तने जयजयशब्दोच्चारिणः ते कुमाराः सनकाद्या अभूवन् । अग्रे सर्वेषामग्रभागे रसविरचनया रसानां विरचनया विवेचनेन भाववक्ता व्यासपुत्रो बभूव । रसा दशधा । तदुक्तम्—"रौद्रोद्भुतश्च शृङ्गारो हास्यं वीरो दया तथा । भयानकश्च बीभत्सः शांतः सप्रेमभक्तिकः ॥" इति ॥ ८९ ॥ सुतेजसां तारुण्येन सुदीप्तिभाजां भक्त्यादिकानां भक्तिज्ञानवैराग्याणां त्रिकं तत्र तस्मिन्काले मध्ये सभामध्ये नटवत् ननर्त्त । अलौकिकं दिव्यम् एतत् कीर्त्तनमीक्ष्य आर्षमिदम्, ईक्षित्वा प्रसन्नस्तुष्टो हरिरपि तत्तदा वच अब्रवीत् ॥ ९० ॥ तदाह—मत्त इति । हे भागवता मत्तः सकाशात् यूयं वरं वृणुध्वं स्वीकुरुत । सांप्रतम् अद्य कथाकीर्त्तनतोऽहं प्रीतोस्मि । इत्येवं तद्वाक्यं तस्य हरेर्वचनं श्रुत्वाऽऽकर्ण्य प्रेमार्द्रचित्ताः प्रेम्णा आर्द्रं द्रवीभूतं चित्तं येषां ते तथाऽतिप्रसन्ना अत्यानन्दयुक्ताः ते प्रह्लादाद्या हरिमूचिरे जगदुः ॥ ९१ ॥ तद्वाक्यमाह—नगाहेति । नगाहगाथासु सप्ताहकथासु एभिः सर्वभक्तैः सहातिप्रयत्नात् अतिप्रयत्नेन त्वया भाव्यं स्थातव्यम् । अयं मे मम मनोरथः भवता पूरणीयः । तथास्तु एवमस्तु इत्युक्त्वाऽच्युतो हरिरंतरधीयत अदृश्योऽभवत् । अत्रान्ते गाथाशब्देन प्रक्रमोपसंहारयोः कथायामेव तात्पर्यमस्ति न तु पाठे सप्ताहे इति सूचितं भवति । तदुक्तम्—"उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ॥" इति । प्रक्रमे 'परीक्षिते कथां वक्तुम्' इत्युक्तम् । "वेदोपनिषदां साराज्जाता भागवती कथा । श्रीमद्भागवतान्मुक्तिः सप्ताहे वाचनं कुरु ॥" "धन्या भागवती वार्त्ता प्रेतपीडाविनाशिनी" इत्युपसंहारः । अभ्यासः—"गयाश्राद्धशतेनापि न मे मुक्तिर्भविष्यति" इति प्रसंगे । "कंपंते सर्वपापानि सप्ताहश्रवणे स्थिते । अस्माकं प्रलयं सद्यः कथा चेयं करिष्यति ॥" इत्यपूर्वता । "किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः । श्रीमद्भागवतं शास्त्रं मुक्तिदाने प्रगर्जति ॥" इति फलम् । "सर्वेषां पश्यतां भेजे विमानं धुंधुलीसुतः । द्वादशात्मा प्रयागश्च" इत्याद्यर्थवादः । "परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने" इत्युपपत्तिरिति विरोधपरिहारः । 'नगाहगाथासु च सर्वभक्तैः' इत्युपसंहारश्च तात्पर्यनिर्णये लिंगं हेतुरित्यर्थः ॥ ९२ ॥ ततः किं वृत्तमित्यत आह—तत इति । हरेरंतर्धानानंतरं तच्चरणेषु तस्य हरेः चरणेषु पादेषु, बहुत्वं छंदोनुरोधात् । नारदः अनमत् प्रणतोऽभूत् । वस्तुतस्तु 'तच्चरणारविंदयोर्ऋषिः' इति पाठः । तथा तेनैव प्रकारेण शुकादींस्तापसांश्चाप्यनमदिति । समाप्तौ मंगलार्थोऽथ शब्दः । पीतकथामृताः पीतं कथाऽमृतं यैस्ते तथा अत एव प्रहृष्टाः प्रसन्नाः परिनष्टमोहाः परिनष्टो सर्वतो नाशं यातो मोहो येषां ते तथा ते शुकाद्याः सर्वे ययुः ॥ ९३ ॥ "शुकेन ससुता भक्तिः स्वशास्त्रे रक्षिता ध्रुवम्" इत्याह—भक्तिरिति । तदा निर्गमसमये सुताभ्यां ज्ञानवैराग्याभ्यां सह सा प्रसिद्धा भक्तिः स्वकीये शास्त्रे श्रीमद्भागवताख्ये शुकेन रक्षिता स्थापिता । अतोऽस्माद्धेतोः भागवतस्य सेवनात् वैष्णवानां चित्तं मनो हरिः समायाति समागच्छति । हि निश्चयेन ॥ ९४ ॥ अनाधाराणामाधारभूतमिदं शास्त्रमित्याह—दारिद्र्ये ति । दरिद्रस्य भावो दारिद्र्यं निर्धनता, दुःखं रोगादिजं, ज्वरस्तापस्तैर्दाहितानां दग्धानां, माया कपटादिरूपा सैव पिशाची

शौनक उवाच—शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः। सुरर्षये कदा ब्राह्मैश्छिन्धि मे संशयं त्विमम् ॥ ९६ ॥

सूत उवाच—आकृष्णनिर्गमात्रिंशद्वर्षाधिकगते कलौ। नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥ ९७ ॥

परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये। शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् ॥ ९८ ॥

तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षगते सति। ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः ॥ ९९ ॥

इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयाऽनघ। कलौ भागवती वार्ता भवरोगविनाशिनी ॥ १०० ॥

कृष्णप्रियं सकलकश्मलनाशनं च मुक्त्यैकहेतुमिह भक्तिविलासकारि।
सन्तः कथानकमिदं पिबतादरेण लोके हितार्थपरिशीलनसेवया किम् ॥ १०१ ॥

स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले।
परिहर भगवत्कथासु मत्तान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ १०२ ॥

असारे संसारे विषयविषसंगाकुलधियः क्षणार्धं क्षेमार्थं पिबत शुकगाथाऽतुलसुधाम्।
किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितकथे परीक्षित्साक्षी यच्छ्रवणगतमुक्त्येककथने ॥ १०३ ॥

रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा। कण्ठे संबध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०४ ॥

तया परिमर्दितानां व्याकुलानाम् "मायाया द्वादशार्था वै पुराणे आत्मपूर्वके। द्रष्टव्या अथ संग्राह्या विबुधैश्च प्रयत्नतः ॥" संसारसिंधौ संसारसागरे परिपातितानां प्रारब्धकर्मभिः निमग्नानां क्षेमाय कल्याणार्थं वै निश्चयेन भागवतं प्रगर्जति उच्चैस्तरां शब्दायते ॥ ९५ ॥ "कस्मिन्कस्मिंस्तु काले वै नृपादिभ्यः शुकादिभिः। प्रोक्तं भागवतं सूतं परिपृच्छति शौनकः।" इत्याह शुकेनेति। राज्ञे परीक्षिते शुकेन भागवतं कदा प्रोक्तम्, सुरर्षये नारदाय ब्राह्मैः सनकादिभिः कदा उक्तम्, इमं मे मम संशयं संदेहं त्वं छिंधि अपाकुरु ॥ ९६ ॥ सूत उत्तरयति—आकृष्णेति त्रिभिः। आकृष्णनिर्गमात् कृष्णस्य स्वधामगमनं मर्यादीकृत्य त्रिंशद्वर्षाधिकगते त्रिंशद्वर्षेभ्यः अधिकं कालं गतः तथाभूते कलौ सति नभस्ये भाद्रपदे मासे नवमीतः कथारंभं शुकः अकरोत्कृतवान् ॥९७॥ परीक्षिच्छ्रवणान्ते परीक्षिच्छ्रवणांतात्। पंचम्यर्थे सप्तमीयम्। तथा पाठ एव इति गुरवः, च पुनः वर्षशतद्वये वर्षाणां शतं वर्षशतं तस्य द्वयं यस्मिन्स तथा तस्मिन्कलौ गते सति शुचौ आषाढमासे शुद्धे शुक्लपक्षे नवम्यां च तिथौ धेनुजो गोकर्णः कथामकथयत् ॥ ९८ ॥ तस्मादपि कालात् त्रिंशद्वर्षगते त्रिंशद्वर्षाणि गतानि यस्मिन्स तथा तस्मिन् एवंभूते कलौ प्राप्ते सति ऊर्ज्जे कार्त्तिकमासे शुक्ले पक्षे नवम्यां तिथौ ब्रह्मणः सुताः सनकाद्या ऊचुः ॥ ९९ ॥ प्रकरणं समाप्तमित्याह—इतीति। हे अनघ तत्त्वयाऽहं पृष्टः एतदित्येवं ते तुभ्यं समाख्यातं कथितम्। कलौ युगे भागवती भागवतसंबंधिनी वार्त्ता कथा भवरोगविनाशिनी संसाररोगहंत्री ॥ १०० ॥ सद्भिरिदं पेयमित्याह—कृष्णेति। कृष्णप्रियं कृष्णस्याभीष्टं सकलकश्मलनाशनं सकलपापविनाशनं च पुनः मुक्त्येकहेतुं मुक्तेरेककारणम् इह लोके भक्तिविलासकारि भक्तेर्विलासं क्रीडारूपं कर्त्तुं शीलमस्येति तथा तत् इदं कथानकं हे संतः आदरेण यूयं पिबत पानं कुरुत। लोके जगति हितार्थपरिशीलनसेवया हितो वांछितश्चासौ अर्थश्च हितार्थः तस्य परिशीलनं चिंतनं तस्य सेवया किं, न किमपि ॥ १०१ ॥ वैष्णवेभ्यो यमोपि बिभेतीत्याह—स्वपुरुषमिति। पाशहस्तं पाशो हस्ते करे यस्य स तथा तं स्वपुरुषं स्वदूतं वीक्ष्य दृष्ट्वा यस्य दूतस्य कर्णमूले यमः वदति—भगवत्कथासु मत्तान्प्रमादिनः त्वं परिहर मा आनय, अन्यनृणां हरिविमुखानां नृणामहं प्रभुः स्वाम्यस्मि। किल निश्चयेन वैष्णवानां प्रभुः दंडकर्त्ता न, अप्येव तेषां ममापि पूज्यत्वात् ॥ १०२ ॥ असारे सारभूते यमित्याह—असार इति। असारे साररहिते संसारे विषयविषसंगाकुलधियः विषयाः शब्दादयः "रूपं शब्दो गंधरसस्पर्शाश्च विषया अमी" इत्यमरोक्तेः। ते एव विषं तस्य संगस्तेन आकुला व्याप्ता धीर्बुद्धिर्येषां ते तथा क्षणार्द्धम् अर्द्धक्षणमपि शुकगाथातुलसुधां शुकस्य गाथा श्रीमद्भागवती कथा सा एव अतुलसुधा अनुपमाऽमृतरूपा तां क्षेमार्थं कल्याणार्थं यूयं पिबत। कुत्सितकथे कुत्सिता निंदिता कथा यस्मिन्स तथा तस्मिन् कुपथे कुत्सितः पंथा मार्गः कुपथस्तस्मिन्कुमार्गे व्यर्थं निष्फलं यथा स्यात्तथा किमर्थं कस्मै प्रयोजनाय यूयं व्रजत गच्छत। यद्यतः श्रवणगतमुक्त्येककथने श्रवणाद्गता प्राप्ता मुक्तिस्तस्या एककथने मुख्यप्रवचने 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेः। परीक्षित्साक्षी भवति। 'श्रवणगतमुक्त्युक्तिकथने' इति पाठे मुक्तिश्च भुक्तिश्च इति मुक्त्युक्ती। 'वर्णस्य वर्णयोर्लोपः' इति शिक्षायां शौनकोक्तेर्भलोपात् श्रवणगतमुक्त्युक्ती तयोः कथने इति केचित्। तत्र दोषः, श्रवणादेः परीक्षितो मुक्तिः, भोगानुक्तेस्तन्मंदं, दिव्यभोगानामपि लाभाद्। गुरवस्तु विशेष्यवाचकपदानां सति विशेषणपदसंनिधाने विशेष्यमात्रपरत्वमिति युक्त्या श्रवणगतमुक्तिकथने इत्येवार्थो युक्त इत्याहुः ॥ १०३ ॥ "कथा कंठस्थिता चेयं वैकुंठपतिरेव सः" इत्याह—रसेति।

इति च परमगुह्यं सर्वसिद्धान्तसिद्धं सपदि निगदितं ते शास्त्रपुंजं विलोक्य ।
जगति शुककथातो निर्मलं नास्ति किञ्चित्पिब परसुखहेतोर्द्वादशस्कंधसारम् ॥ १०५ ॥
एतां यो नियततया शृणोति भक्त्या यश्चैनां कथयति शुद्धवैष्णवाग्रे ।
तौ सम्यग्विधिकरणात्फलं लभेते याथार्थ्यान्न हि भुवने किमप्यसाध्यम् ॥ १०६ ॥

इति श्रीपद्मपुराण उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये श्रवणविधिकथनं नाम षष्ठोऽध्यायः ॥ ६ ॥
श्रीकृष्णार्पणमस्तु ॥ समाप्तमिदं श्रीमद्भागवतमाहात्म्यम् ॥

रसप्रवाहसंस्थेन रसः प्रेमरूपः शांतरूपो वा तस्य प्रवाहस्तस्मिन् संतिष्ठते इति तथा स तेन श्रीशुकेन ईरिता कथिता कथा येन पुंसा कंठे संबध्यते धार्यते स पुमान् वैकुंठप्रभुः वैकुंठस्वामी स्यात् ॥ १०४ ॥ परं रहस्यं नान्यदस्तीत्याह—इतीति । इति च इदमेव परमं गुह्यम् उत्कृष्टं गोप्यं रहस्यं सर्वसिद्धांतसिद्धं सर्वेषु सिद्धांतेषु सिद्धं प्रसिद्धं सपदि शीघ्रं शास्त्रपुंजं शास्त्रसंघं विलोक्य दृष्ट्वा ते तुभ्यं मया निगदितमुक्तम् । जगति संसारे शुककथातः श्रीमद्भागवतकथातो निर्मलं शुद्धिकरं किंचिदन्यन्नास्ति । परसुखहेतोः परं सुखं मोक्षाख्यं तस्य हेतोर्द्वादशस्कन्धसारं द्वादश स्कन्धा एव सारः, द्वादशस्कन्धेषु वा सारः सारांशस्तं त्वं पिबेति सूतोक्तिः ॥ १०५ ॥ श्रोतृवक्त्रोः कृतकृत्यतामाह—एतां कथां नियततया नियमेन भक्त्या यः शृणोति, एतां कथां शुद्धवैष्णवाग्रे यश्च कथयति तौ द्वौ सम्यक् विधिकरणाद्विधानकरणेन सम्यक् फलं लभेते प्राप्नुयाताम् । याथार्थ्यात् वास्तवार्थत्वात् भुवने 'विष्टपं भुवनं जगत्" इति कोशात् । जगति असाध्यं किमु, अपि तु न किमपि ॥ १०६ ॥

रामपूर्वप्रतापेन ऋजुटीका कृता त्वियम् । राधाकृष्णमुदे भूयाज्जयपत्तनवासिना ॥ १ ॥
इति श्रीशेखावाटयंतर्गतविजयपुरनिवासिव्राजलालिपण्डितरामप्रतापशर्मविरचितायां
श्रीमद्भागवतमाहात्म्यटीकायामृजुनाम्न्यां षष्ठोऽध्यायः ॥ ६ ॥

गजाब्धिगोभूसंख्याते वैक्रमीये सुवत्सरे । बाहुले शुद्धपंचम्यां टीकेयं पूर्णतामगात् ॥ १ ॥
पठन्तु बालकाः सर्वे विवदन्तां विवादिनः । मनीषिणः शोधयन्तु दुष्टा नश्यन्तु मत्सरात् ॥ २ ॥
यथामति कृता चेयं दृश्यतां शुद्धभावतः । परिशोध्या बुधैः प्रेम्णा श्रमचिन्ताविचारतः ॥ ३ ॥

"अथ वैष्णवचित्तेषु दृष्ट्वा भक्तिमलौकिकीम्" इत्यारभ्य "धावन्तोप्याययुः सर्वे प्रथमं ये च वैष्णवाः" "विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे" इति च मध्ये "यश्चैनां कथयति शुद्धवैष्णवाग्रे" इत्यन्ते चोक्तत्वाद्वैष्णवानां श्रेष्ठत्वमुक्तम्, तेषां च शालग्रामपूजनं तुलसीमञ्जर्याद्यर्पणं गोपीचन्दनधारणं च मुख्यो धर्मोऽस्ति, तदर्थं तेषां निरूपणं पुरश्चरणविधिश्च । तथाहि पाद्मे—"मस्तके धारणं कार्यं कर्णयोश्च तथैव च । कंठदेशे च विपुलं बाह्वोश्च मणिबन्धके ॥ तुलसीमञ्जरीश्चैव पञ्चांगे धारयेन्नरः । आजन्मपातकं धूय विष्णुलोके स गच्छति ॥ "गोपीचन्दनमाहात्म्ये इतिहासः पुरातनः । कांबोजसंज्ञिते देशे वैश्योभूद्वैष्णवोत्तमः ॥ सुशीलो विष्णुभक्तश्च कामक्रोधविवर्जितः । तस्य द्वार्य्येकदा मार्गी ह्यावेद्य संस्थितो बहिः ॥ न ज्ञातो वैष्णवेनैव रात्रौ सुप्तोऽभवद् द्विजः । निद्रायुक्तस्तु पांथः सोप्यहिना दंशितो भृशम् ॥ मृतमात्रस्य तस्यैव मूषकः स्पर्शतां गतः । क्षुधया पीड्यमानोपि कृत्वा सुविवरं महत् ॥ गोपीचन्दनार्द्रमुखो तद्देहं संस्पृशन्खलु । गोपीचन्दनसंयोगाद्गतोसौ विष्णुमन्दिरम् । अत एव मनुष्यैस्तु कर्त्तव्यं तिलकं शुभम् । गायत्र्याः पुरश्चरणे यत्फलं प्राप्यते द्विजैः ॥ तत्फलं प्राप्यते विप्र श्लोकार्द्धश्रवणेन वै ॥ अश्रुत्वा भगवद्वार्त्तां यो भुंजीत गृहेषु वा । अन्नं पीयेत पानं वा पापभुक् सोऽधमो मतः ॥ तदन्नं पापरूपं च तज्जलं मदिरासमम् । अत एव मनुष्यैस्तु विष्णुधर्मपरायणैः । श्रोतव्यं च प्रयत्नेन नित्यं भागवतं शुभम् । ब्राह्मणानां यथा संध्या वैष्णवानां तथा द्विजाः ॥ श्रीमद्भागवतं शास्त्रं सत्यं सत्यं वदामि ते । अष्टोत्तरशतं चास्य कार्यं पारायणं शुभम् । केदारे उदकं पीत्वा पुनर्जन्म न विद्यते ॥ नरस्यैव तथा तस्य पुनर्जन्म न विद्यते । स एव वैष्णवो धन्यः पारायणशताधिकृत् । श्रीभागवतमन्त्रस्य ऋषिः प्रोक्तश्च नारदः ॥ ब्रह्म बीजं तथा प्रोक्तं छंदश्च बृहती स्मृतम् । गुणातीतोऽव्ययश्चैव श्रीकृष्णो देवता स्मृतः ॥ भवरोगहारिणी चैव भक्तिः शक्तिरिहोच्यते । ज्ञानं तथा च वैराग्यं कीलकं वै तथा स्मृतम् ॥ इदं मन्त्रार्थविधिवज्जाप्यं मन्त्रफलप्रदम् । ॐकारं पूर्वमुच्चार्य शिवेनोत्कीलयेन्नरः । गायत्रीशतमुच्चार्य ततः पठनमाचरेत् ।" इति विधिः । "अष्टोत्तरशतैः पाठैः पुरश्चरणमिष्यते । परात्परतरं ज्ञानमनेनैव हि जायते । विना वेदान्तसेवाभिर्विना चान्द्रायणादिभिः । विना काशीनिवासाद्यैर्विना गङ्गानिषेवणैः ॥ महापापौघनाशाय पुण्योपायो महानयम् । पुरश्चरणमेतस्य कुरु पारायणं यथा ॥"

इति श्रीमद्भागवतपुरश्चरणविधिः ॥ समाप्तश्चायं ग्रन्थः ॥

# ❀ अथ स्कान्दं श्रीमद्भागवतमाहात्म्यम् ❀

॥ ॐ नमो गोवर्द्धनधारिणे श्रीकृष्णाय ॥

इह खलु जगति सर्वजगदुद्धारकप्रेमपथप्रवर्तकं श्रीमद्भागवतं महापुराणं समस्तवैदिकधर्मावलम्बिभिः परमपवित्रतया समाद्रियमाणम्। शश्वद्भक्तजनैः पापठ्यमानम्। परमप्रेमिभिः सुज्ञैः शोश्रूयमाणमस्ति। यत्पठनश्रवणसमर्चनादिभिस्तरीतर्ति धर्मसेतुशीताचलमध्यवर्ती भक्तजनः। यत्प्रभावेण दरीधर्ति धर्मो धरित्रीम्। यच्च संजरीहर्ति तापत्रयम्। चरीकर्ति सकलकामनासिद्धिम्। तस्य सटीकमिदमध्यायचतुष्टयात्मकं माहात्म्यं मासिकादितत्पारायणारम्भादर्वाग्दिने तावदवलोक्य सकलजगदुद्धारार्थं वाचनीयं पौराणिकविद्वज्जनैरित्यस्माकमभ्यर्थनम्।

येनाकारि सुशोभनं जयपुरे श्रीकालिकामन्दिरं येनाश्रावि पुराणमुख्यमखिलं वारत्रयं स्वे गृहे।
येनाधाय्यशनप्रवृत्तिरखिला विद्यार्थिनां विंशतेः शास्त्राम्भोधिरमन्थि येन कृतिना जीयात्स बालाभिधः॥ १॥
श्रीगोवर्द्धनसेवया हि सततं पुत्रावलम्भि स्त्रिया येनाधारि सतामनेकविदुषां कार्याण्यनेकान्यपि।
येनातापि च विद्विषां हि हृदयं राजाप्यमोहि प्रभुस्तस्य प्रार्थनया मया कृतमिदं सर्वं समालोक्यताम्॥ २॥
निर्मत्सरैश्च दृश्येयं वैष्णवानन्ददायिनी। मया श्रीकृष्णलाभाय कृता वै नात्र संशयः॥ ३॥
कामधेनुरियं टीका वैष्णवानन्ददायिनी। श्रीकृष्णांघ्र्यब्जच्छायायां स्थिता भक्तिं प्रयच्छतु॥ ४॥

॥ श्रीगोवर्द्धनधारी श्रीकृष्णो जयति॥

श्रीकृष्णं श्रीगुरून् व्यासं शुकं सूतं द्विजान् गिरम्। गणेशं वैष्णवांस्तातं विश्वं वन्दे हरेस्तनुम्॥ १॥
रेवतीरमणं रामं नत्वा गोपेश्वरं शिवम्। स्वाचार्य्यचरणान्नित्यं प्रणमामि मुहुर्मुहुः॥ २॥
भक्त्याभासेनापि तोषं दधाने विश्वाध्यक्षे विश्वनिस्तारिनाम्नि। शुद्धाद्वैते शुद्धसाकाररूपे तत्त्वे तस्मिन् नित्यमास्तां रतिर्नः॥ ३॥
सुरवसुधा व्रजवसुधा जयतु सुधारसवाहिनी यमुनापि। जयतु सकलसुरमुकुटो धृतकरलकुटोऽत्र चारयन् धेनूः॥ ४॥
श्रीमद्भागवतं नत्वा खाण्डलद्विजवंशजः[1]। कुर्वे हरिहराख्योऽहं श्रीमन्माहात्म्यटिप्पणीम्॥ ५॥
प्रथमे विष्णुरातेन चाहूतो मुनिसत्तमः[2]। व्रजस्य तत्त्वं वज्राय प्रोच्य यात इतीर्य्यते॥ ६॥

नन्वस्य ग्रन्थस्य स्कन्दपुराणान्तर्गतत्वमभिधीयते, तत्रास्य माहात्म्यस्यानुपलब्धेः कथं प्रामाण्येन मान्यत्वमिति चेदुच्यते। यद्यपि स्कन्दमहापुराणस्थबहुलभागस्य कालेन तिरोहितत्वान्नहीदानीमुपलब्धांशे श्रीमद्भागवतस्येदं माहात्म्यमुपलभ्यते, तथाप्यध्यायचतुष्टयमाहात्म्यस्यास्या[3]प्रतिषिद्धप्रमितसमाख्यान्तरार्थोपनिबद्धत्वेनार्यावर्तीयश्रीमद्भागवताखिलवक्तृसम्मतत्वात्प्रामाण्येन मान्यत्वमतः सर्वैः शिरोधार्य्यं चेत्यनवद्यमेतदिति तावच्छ्रीकृष्णभक्तैर्ध्येयमिति।

श्रीसच्चिदानन्दघनस्वरूपिणे कृष्णाय चानन्तसुखाभिवर्षिणे।
विश्वोद्भवस्थाननिरोधहेतवे नुमो वयं भक्तिरसाप्तयेऽनिशम्॥ १॥

अथाखिलजनानामपारदुर्वारासारसंसारपरपारप्रापणार्थं नाविकतनयायां सत्यवत्यां कृतावतारो भगवतो ज्ञानावतारो भगवान् महर्षिः श्रीकृष्णद्वैपायनस्वरूपो विश्वोपकाराय श्रीकृष्णाख्यपरब्रह्मणो भगवतश्चिन्मयगुणवर्णनप्रधानं श्रीमद्भागवतशास्त्रं नारायणविरञ्चिनारदादिसंप्रदायप्राप्तं प्रादुर्भाव्य तन्माहात्म्यश्रवणविधिफलादिबोधकं शास्त्रं प्रारिप्सुस्तत्प्रतिपाद्यदेवतास्वरूपवर्णननमस्कारात्मकं मंगलमाचरति श्रीति। वयं भक्तिरसाप्तये-भक्तिरसस्य "रौद्रोऽद्भुतश्च शृङ्गारो हास्यं वीरो दया तथा। भयानकश्च

---

१. खाण्डलद्विजवंशजः—श्रीमद्भगवत्परशुरामपूज्यपादयाज्ञिकखण्डलेश्वरब्राह्मणवंशजन्मेत्यर्थः खाण्डलशब्दस्य निरुक्तिः श्रीमन्महाभारते वनपर्वणि शतदशाधिकशततमेऽध्याये उक्ता॥ ततो यज्ञेन महता जामदग्न्यः प्रतापवान्॥ तर्पयामास देवेन्द्रमृत्विग्भ्यः प्रददौ महीम्॥११॥ वेदीं चाप्यददद्धैमीं कश्यपाय महात्मने॥ दशव्यामायतां कृत्वा नवोत्सेधां विशांपते॥ १२॥ तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा॥ व्यभजंस्ते तदा राजन् प्रख्याताः खाण्डलेश्वराः॥ १३॥ खाण्डलायना इति नीलकण्ठसम्मतपाठे तु खाण्डलब्राह्मणवंश्या इत्यर्थः॥ २॥ २. शाण्डिल्यः ३. अन्या सामाख्या—समाख्यान्तरम् समाख्या नाम तुल्यार्थाभिधात्री तस्य योऽर्थः स समाख्यान्तरार्थः केनाप्यप्रतिषिद्धः अत एव यः प्रमितः सोऽप्रतिषिद्धप्रमितः सचासौ समाख्यान्तरार्थश्च तेनोपनिबद्धस्तस्य भावस्तत्वं तेनेत्यर्थः॥ ९॥

नैमिषे सूतमासीनमभिवाद्य महामतिम् । कथामृतरसास्वादकुशला ऋषयोऽब्रुवन् ॥ २ ॥
श्रीऋषय उचुः—वज्रं श्रीमाथुरे देशे स्वपौत्रं हस्तिनापुरे । अभिषिच्य गते राज्ञि तौ कथं किं च चक्रतुः ॥ ३ ॥
श्रीसूत उवाच—नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ४ ॥
महापथं गते राज्ञि परीक्षित्पृथिवीपतिः । जगाम मथुरां विप्रा वज्रनाभदिदृक्षया ॥ ५ ॥
पितृव्यमागतं ज्ञात्वा वज्रः प्रेमपरिप्लुतः । अभिगम्याभिवाद्याथ निनाय निजमन्दिरम् ॥ ६ ॥

वीभत्सः शान्तः सप्रेमभक्तिकः ॥" इति पुराणप्रसिद्धदशमरसस्य प्राप्तये कृष्णाय-श्रीनन्दनन्दनाय अनिशमहर्निशम् नुम इत्यन्वयः । तं स्वरूपलक्षणेन लक्षयन् विशिनष्टि श्रीसच्चिदानन्दघनस्वरूपिणे इति । सच्च चिच्च आनन्दघनश्चेति सच्चिदानन्दघनम् । श्रिया-राधिकया युक्तम् श्रीराधैव वा सच्चिदानन्दघनं तदेव स्वरूपमस्यास्तीति तस्मै । तमेव तटस्थलक्षणेन लक्षयन् पुनर्विशिनष्टि विश्वोद्भवस्थाननिरोधहेतवे इति । प्रकृतिनियन्तृत्वेन विश्वोत्पत्त्यादेः परमकारणाय । भक्तेषु तस्य परमदयालुत्वं सूचयन् पुनर्विशिनष्टि अनन्तसुखाभिवर्षिणे इति । अनन्तसुखस्य-स्वप्रेमरसाख्यस्य सर्वतो वर्षणशीलायेति ॥ १ ॥ एवं भगवत्स्वरूपवर्णननमस्कारात्मकं मंगलं विधाय कथामुपक्रमते नैमिषे इति । नैमिषे-तन्नामके वैष्णवे क्षेत्रे । आसीनम् , ब्रह्मसदस्युत्तमसिंहासने इति बोद्ध्यम् । सूतम्-रोमहर्षणनामानम् । अभिवाद्य-प्रणम्य । ऋषयः-शौनकादयः यतः कथामृतरसास्वादकुशलाः-कथैवामृतं तस्य यो रसो माधुर्यं तस्यास्वादने कुशलाः-निपुणा अतोऽब्रुवन्नित्यन्वयः ॥ २ ॥ श्रीऋषय ऊचुरिति व्यासोक्तिः । "स्वराट् पौत्रं विनयिनमभ्यषिञ्चद्गजाह्वये । मथुरायां तथा वज्रं शूरसेनपतिं ततः ॥" इति प्रथमस्कन्धोक्तिमनुसृत्य ऋषयः शौनकादयः श्रीसूतं पप्रच्छुरित्यर्थः । किं पप्रच्छुरित्यपेक्षायामाह वज्रमिति । श्रियागोवर्द्धनादिसमृद्ध्या परमशोभने माथुरे देशे वज्रम्-वज्रनाभम्-श्रीकृष्णप्रपौत्रम् । सत्या भीम इतिवदुत्तरपदलोपः । हस्तिनापुरे स्वपौत्रं परीक्षितं चाभिषिच्य । राज्ञि-युधिष्ठिरे । उदीचीम् उत्तरां दिशं गते सति । तौ-परीक्षिद्वज्रनाभौ किं कर्म चक्रतुस्तच्च कथं केन प्रकारेण चक्रतुरिति प्रश्नद्वयस्योत्तरं कृपया ब्रूहीति शेषः ॥ ३ ॥ तदेवं शौनकादीनां प्रश्नमाकर्ण्य श्रीसूतो देवं प्रणमति नारायणमिति । श्रीभागवत-माहात्म्यकथाया निर्विघ्नपरिसमाप्त्यर्थं प्रथमं नारायणादीन्नमस्कृत्य ततः सर्वशास्त्रेषु बुद्ध्या व्याप्तो वक्ता । जयन्ति भक्ताः कामादीननेनेति जयो ग्रन्थः, करणेऽच् । तमुदीरयेदिति स्वयं तथोदीरयन्नन्यान् पौराणिकानुपशिक्षयति । अत्र नादब्रह्मात्मकश्रीनारायणस्य श्रीभागवतबीजत्वात् नरोत्तमनरस्य शुद्धजीवस्य च तद्भक्तत्वात् सरस्वत्याश्च वागीश्वरीत्वात् श्रीवेदव्यासस्य श्रीभागवतप्रवर्तकत्वाच्च तेभ्यो नमस्करणं युक्तमेवेति । उदीरयेदिति विध्यर्थे लिङ् । तथा च श्रीभागवतस्य महामन्त्ररूपत्वादस्मिन्नेव श्लोके । ओमस्य श्रीश्रीमद्भागवतमहामन्त्रस्य कृष्णद्वैपायनऋषिः, अनुष्टुप्छंदः, श्रीकृष्णपरमात्मा देवता । सरस्वती शक्तिः । नारायणो बीजम् । श्रीराधागोपालप्रसादद्वारा मम चतुर्वर्गफलसिद्ध्यर्थे जपे विनियोग इति तस्य विनियोगोऽपि सूचित इत्यपि बोद्धव्यम् । अन्यदन्यमहानुभावचरणैः । ननु गायत्र्या च समारम्भ इत्याद्युक्तेः कथम-स्यानुष्टुप्छंदोऽङ्गीक्रियते ? अत्रोच्यते । गायत्र्या च समारम्भ इत्यत्र गायत्र्या—गायत्र्यर्थेन समारम्भो न तु गायत्रीछन्दसा इत्यग्रे स्पष्टीभविष्यति । श्रीधरीयपाठेनापि शुक उवाच, शौनक उवाच, सूत उवाच, इति श्रीत्यादिगद्यगणनेनाष्टादशसहस्र-संख्यापूर्तिरिति शिष्टैर्ब्रह्मावर्त्तीयादिभिरङ्गीकृतत्वादस्यानुष्टुप्छंद एवाङ्गीकृतमिति । विशेषजिज्ञासा चेल्लघुभागवतभूषणनामक-ग्रन्थो द्रष्टव्यः । नरा अयनं यस्य अत एव नरा उत्तमा भवन्ति यस्मात्तं नरं श्रीकृष्णम् । देवीम्-प्रियं जिगीषमाणामत एव सरो मनःसरो विद्यते क्रीडोपस्करत्वेन अस्यास्तां-श्रीराधिकां च नमस्कृत्य ततो वक्ता विविधमस्यते विस्तार्य्यतेऽसाविति व्यासस्तं जयम्—श्रीभागवतमुदीरयेदित्यपि व्याख्यान्तरम् ॥ ४ ॥ तदेवं देवं प्रणम्य श्रीसूत उत्तरमाह महापथमित्यादिना । ननु महर्षिभ्य उत्तरदाने सूतस्य कथमधिकार इति चेदुच्यते । सूतोऽयमग्निकुण्डात्समुत्पन्नो रोमहर्षणनामा उच्यते । 'सूतोऽस्यध्वर-कुण्डत' इत्यादित्यपुराणीयवचनात् । न च क्षत्रियाद्ब्राह्मण्यां सूत इति विलोमजो ग्राह्यः । विलोमजस्य पुराणश्रवणेऽधिकार-मस्त्वेऽपि शौनकादिमहर्षिभ्यो ग्रन्थपुरस्कारेण तत्कथनेऽनधिकारात् पुराणस्य पञ्चमवेदत्वात् । तदुक्तं छान्दोग्योपनिषदि । 'इतिहासः पुराणं च पञ्चमं वेदानां वेदमिति ।' न च 'कस्मादास्ते विलोमजः' इति श्रीभागवतस्थबलरामवचनानां का गतिरिति वाच्यम् । बृहस्पतीन्द्रयोर्ब्राह्मणक्षत्रिययोर्विलोममन्त्रहवनेन वह्नेः सूतः सूत इति श्रीमद्भारतटीकायां नीलकण्ठेन तद्वृतेः प्रदर्शनात् । तल्लेखनस्यैव श्रीमद्भागवतषड्ध्यायपाद्मीयमाहात्म्यटीकाकारेणाप्यङ्गीकृतत्वाच्च । तदुक्तं शाण्डिल्यसंहितायाम् "व्याससिंहासनं चान्यद्दीयते ऋषिभिर्द्विजैः । रौमहर्षणये यद्वत् शास्त्रव्याख्याकृतेऽर्पितम् ॥ संश्रयेद्ब्राह्मणो विद्वान् सूतो नैव विलोमजः । मन्त्रयोः प्रातिलोम्येन मखे जातस्तथोच्यते ॥ सूताः पौराणिकाः प्रोक्ताः" इति विलोमवृत्तिकथने पुराणशब्दः स तु वंशादिकीर्तनप्रबन्धपरतया भाक्त इति ज्ञेयम् । विप्राः—हे शौनकादयः । राज्ञि—युधिष्ठिरे । महापथम्—उदीचीं दिशम् । वज्रनाभस्य दिदृक्षा-द्रष्टुमिच्छा तया ॥ ५ ॥ पितृव्यमिति । अथेति चकारार्थे । पितृव्यमिव पितृव्यं परीक्षितम् । इन्द्रप्रस्थान्मथुरां पुरीमागतं ज्ञात्वा । वज्रः प्रेम्णा स्नेहेन परिप्लुतः सन्नभिगम्य सम्मुखं गत्वा अभिवाद्य प्रणम्य च निजमन्दिरम्—स्वकीयं प्रासादं निनाय-प्रापित-

परिष्वज्य स तं वीरः कृष्णैकगतमानसः । रोहिण्याद्या हरेः पत्नीर्ववन्दायतनागतः ॥ ७ ॥
ताभिः सम्मानितोऽत्यर्थं परीक्षित्पृथिवीपतिः । विश्रान्तः सुखमासीनो वज्रनाभमुवाच ह ॥ ८ ॥
श्रीपरीक्षिदुवाच—तात त्वत्पितृभिर्नूनमस्मत्पितृपितामहाः । उद्धृता भूरिदुःखौघादहं च परिरक्षितः ॥ ९ ॥
न पारयाम्यहं तात साधु कृत्वोपकारतः । त्वामतः प्रार्थयाम्यङ्ग सुखं राज्येऽनुयुज्यताम् ॥१०॥
कोशसैन्यादिजा चिन्ता तथारिदमनादिजा । मनागपि न कार्या ते सुसेव्याः किन्तु मातरः ॥ ११ ॥
निवेद्य मयि कर्तव्यं सर्वाधिपरिवर्ज्जनम् । श्रुत्वैतत्परमप्रीतो वज्रस्तं प्रत्युवाच ह ॥ १२ ॥
श्रीवज्रनाभ उवाच—राजन्नुचितमेतत्ते यदस्मासु प्रभाषसे । त्वत्पित्रोपकृतश्चाहं धनुर्विद्याप्रदानतः ॥ १३ ॥
तस्मान्नाल्पापि मे चिन्ता क्षात्रं दृढमुपेयुषः । किन्त्वेका परमा चिन्ता तत्र किञ्चिद्विचार्य्यताम् ॥१४॥
माथुरे त्वभिषिक्तोऽपि स्थितोऽहं निर्ज्जने वने । क्व गता वै प्रजाऽत्रत्या यत्र राज्यं प्ररोचते ॥ १५ ॥

वानित्यन्वयः ॥ ६ ॥ प्रासादमागत्य यत्कृतवांस्तदाह परिष्वज्येति । आयतनागतः-प्रासादमागतः । कृष्ण एवैकं-केवलं गतं मानसं यस्य सः—प्रसिद्धो वीरः—परीक्षित् । तम्—वज्रनाभम् । परिष्वज्य—आलिङ्गय "स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः । इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयद् ॥" इत्येकादशोक्तेस्तत्र मथुरायां वज्राभिषेकार्थं प्रवेशितास्ततः प्रभृति तत्रैव स्थिताः रोहिण्याद्याः षोडशसाहस्रं हरेः पत्नीर्ववन्द । अत्र रुक्मिण्याद्या इति पाठस्त्वज्ञकपोलकल्पितत्वादनादरणीयः । "कृष्णपत्न्यो-विशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ।" इत्येकादशोक्तेः । अस्यार्थः—सः श्रीकृष्ण एवात्मा स्वरूपं यासां ताः स्वरूपशक्तयो रुक्मिण्या-द्यष्टपट्टमहिष्यः प्रभासे एव अग्निगताविल्यस्मादङ्ग्यते-प्राप्यते स्वरूपशक्तिभूताभी रुक्मिण्याद्यष्टपट्टमहिषीभिरित्यग्निस्तं नित्यानुभूतं कृष्णाख्यं धामेति यावत् आविशन्-आ-समन्तात्-सर्वभावेन प्रविष्टा इत्यर्थः ॥ ७ ॥

ताभिरिति । ततश्च पृथिवीपतिः-राजा परीक्षित् । अत्यर्थम्-अतिशयेन । सम्यक्-वस्त्रभूषणादिना मानितः-सत्कृतः । सम्माननेनैव विगतश्रमः । अत एव सुखं यथा स्यात्तथाऽऽसीनः सन् वज्रनाभं हेति स्फुटमुवाचेत्यन्वयः ॥ ८ ॥ परिक्षिदु-क्तिमेवाह तात इत्यादिचतुर्भिः । तातेति स्नेहेन संबोधनम् । हे वत्स त्वत्पितृभिः-श्रीराम-कृष्णादिभिरस्मत्पितृपितामहाः-युधिष्ठिरादयः । भूरिदुःखौघात्-विषमोदकदावजतुगृहदाहहिडंबादिराक्षसदर्शनादिबहुविपद्गणाद्रक्षिताः । अहमप्यश्वत्थामो-पसृष्टब्रह्मास्त्राद्रक्षितश्चेत्यन्वयः ॥ ९ ॥ नेति । तातेति पूर्ववत् । उपकारतः—त्वत्पित्रुपकारेण हेतुना । त्वदर्थं साधु-सुकर्म कृत्वाऽपि । प्रत्युपकारकरणे न पारयामि—नाहं समर्थो भवामि । त्वत्पित्रुपकाराणामनन्तत्वादिति भावः । अतस्त्वां प्रार्थयामि । सा का तव प्रार्थना इत्यपेक्षायामाह अङ्गेति अङ्ग हे वज्रनाभ । त्वया राज्ये सुखं यथा स्यात्तथाऽनुयुज्यताम् । मत्प्रार्थनया तव राज्यकरणेनैव ममानृण्यमिति भावः ॥ १० ॥ ननु कोशादिकं विना कथं राज्यानुयोगो भवेदित्याशङ्कयाह कोशेति । कोशसैन्यादिजा आदि-शब्देनामात्यादिचिन्तापरिग्रहः । तथारिदमनादिजा—अत्रादिशब्देन नास्तिकादिदमनचिन्तापरिग्रहः । कोशादीनां चिन्ता मनाक्-ईषदपि ते-त्वया न कार्या । कृत्यानां कर्तरि वेति कर्तरि षष्ठी । किन्तु । मातरः कृष्णपत्न्यः सुसेव्याः—श्रद्धापूर्वकं पादसंवाहनादिभिः सेवितुं योग्याः । तासां संसेवनेनैव तव सर्वचिन्ताहानिरिति भावः ॥ ११ ॥ । किञ्च । निवेद्येत्यर्द्धकेन । मनोव्यथां मयि निवेद्य-मां प्रति श्रावयित्वा तत्परिवर्जनं त्वया कर्तव्यम् । निवेदितं चेति पाठे तु सुगमम् । चकार एवार्थे । सर्वमनोव्यथायाः परिवर्ज्जनं यस्मात्तन्मन्निवेदितम्-राज्यानुयोगादिकं त्वया कर्तव्यमेव । श्रुत्वेत्यर्द्धकेन सूतोक्तिः । ततो वज्रः एतत्-चिन्तात्याग-पूर्वकमातृसेवनराज्यानुयोगादिपरीक्षिद्वचनं श्रुत्वैव परमप्रीतः सन् । तम्-परीक्षितं प्रत्युवाच । न हि वक्तव्येऽर्थे तस्य कश्चित्संदेह इति सूचयन्नाह हेति ॥ १२ ॥ वज्रोक्तिमेव दर्शयति राजन्नित्यादित्रिभिः । तत्र राजन्नित्यर्द्धकम् । राजन्निति सादरसम्बोधनम् । हे पितृव्य त्वं यच्चिन्तात्यागपूर्वकमातृसेवनाद्यस्मासु प्रभाषसे उपदिशसि । तदेतत् ते-तव पितृव्यत्वादुचितमेव । अस्मास्विति वहुवचनन्तु स्वभृत्यसाहित्याभिप्रायेण । न हि तावन्मम कोशसैन्यादिजा चिन्ता इति सहेतुकमाह त्वत्पित्रेति । त्वत्पित्रा-अभिमन्युनापि धनुर्विद्यायाः सरहस्यदानेनाहमुपकृतश्च ॥ १३ ॥ तस्मादिति । तस्मात्-त्वत्पितृकृतोपकाराद्धेतोः दृढं क्षात्रम्-क्षत्रियत्वमुपेयुषः-प्राप्तस्य मे-मम कोशसैन्यादिजा चिन्ता स्वल्पापि नास्ति । तर्हि किमित्यौदासीन्यं भजसे । किन्त्वित्यर्द्धकम् । मम त्वन्यैव परमा—अनेकोपायैरप्यनिवार्या । एका-मुख्या चिन्तास्ति । तच्चिन्ताविषये त्वया किञ्चित्-रहस्यं विचार्य्यताम् ॥ १४ ॥ सा का तव परमा चिन्ता इत्यपेक्षायामाह माथुरे इति । माथुरे देशे । अहं वृद्धप्रपितामहेन युधिष्ठिरेणाभिषिक्तोऽपि निर्ज्जने वने स्थितोऽस्मि । किञ्च यत्र-यासु प्रजासु सतीषु मह्यं राज्यं प्ररोचते ता अत्रत्याः प्रजाः क्व गता इत्यहं न जाने इति शेषः । इत्येव मम परमा चिन्ता नान्येति भावः । प्रजेति जात्यभिप्रायेणैकवचनम् ॥ १५ ॥

---

( १ ) परमप्रीतत्वं नाम परीक्षिद्वचसा समर्थितभगवत्पत्नीसेवनोत्साहित्वम् ।

इत्युक्तो विष्णुरातस्तु नन्दादीनां पुरोहितम् । शाण्डिल्यमाजुहावाशु वज्रसंदेहनुत्तये ॥ १६ ॥
अथोटजं विहायाशु शाण्डिल्यः समुपागतः । पूजितो वज्रनाभेन निषसादासनोत्तमे ॥ १७ ॥
उपोद्घातं विष्णुरातश्चकाराशु ततस्त्वसौ । उवाच परमप्रीतस्तावुभौ परिसान्त्वयन् ॥ १८ ॥
श्रीशाण्डिल्य उवाच—शृणुतं दत्तचित्तौ मे रहस्यं व्रजभूमिजम् । व्रजनं व्याप्तिरित्युक्त्या व्यापनाद्व्रज उच्यते ॥ १९ ॥
गुणातीतं परं ब्रह्म व्यापकं व्रज उच्यते । सदानन्दं परं ज्योतिर्मुक्तानां पदमव्ययम् ॥ २० ॥
तस्मिन्नन्दात्मजः कृष्णः सदानन्दाङ्गविग्रहः । आत्मारामश्चाप्तकामः प्रेमाक्तैरनुभूयते ॥ २१ ॥
आत्मा तु राधिका तस्य तयैव रमणादसौ । आत्मारामतया प्राज्ञैः प्रोच्यते गूढवेदिभिः ॥ २२ ॥

कामास्तु वाञ्छितास्तस्य गावो गोपाश्च गोपिकाः ।
नित्याः सर्वे विहाराद्या आप्तकामस्ततस्त्वयम् ॥ २३ ॥

इतीति । तुरेवार्थे । इत्येवं-राजन्नित्याद्युक्तप्रकारेणोक्तो विष्णुरातः-श्रीपरीक्षित् । वज्रसंशयस्यापनयनाय नन्दादीनां पुरोहितं शाण्डिल्यनामानमृषिमेवाजुहाव । तस्य व्रजरहस्यज्ञत्वादिति भावः ॥ १६ ॥ अथेति । अथ-आह्वानानन्तरम् । उटजम्-पर्णशालाम् । आशु-शीघ्रमेव विहाय । सम्यगाह्लादपूर्वकमुपागतः शाण्डिल्यः वज्रनाभेन पूजितः सन्नासनोत्तमे निषसाद उपविवेश । समुपसर्गेणानपेक्षितावसरत्वं गृहीतव्रजरहस्यप्रतिपादकशास्त्रसार्थत्वं च ज्ञापयतीति केचित् ॥ १७ ॥ उपोद्घातमिति । ततश्च-तदनन्तरमेव । परीक्षित् तदग्रे उपोद्घातम्-प्रकृतसिद्ध्यर्थां चिन्तामाश्वेव चकार । तदुक्तम् चिन्तां 'प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इति । प्रकृतमत्र वज्रस्य राज्यानुयोगादि तन्निष्पत्त्यर्थं चिन्ता हि माथुरप्रजाऽभावविषया व्रजरहस्यश्रवणादिलक्षणा वा, तच्छ्रवणाद्यन्तरा राज्यानुयोगाद्यनिष्पत्तेः । ततस्तु-तदनन्तरमेवासौ शाण्डिल्यः व्रजरहस्यपरिप्रश्नेन परमप्रीतोऽत एव तावुभौ-परीक्षिद्वज्रनाभौ परिसान्त्वयन्-गुणवर्णनादिस्तुत्यात्मकसाममार्गेण संबोधयन्नुवाचेत्यन्वयः ॥ १८ ॥ शाण्डिल्योक्तिमेव दर्शयति शृण्वित्यादित्रयोविंशतिभिः पद्यैः । भो परीक्षिद्वज्रनाभौ युवां दत्तचित्तौ सन्तौ मे-मत्तो व्रजभूमितत्त्वं शृणुतम् । व्रज गताविल्यस्मात् 'गोचरसंचरवहव्रजव्यजापणनिगमाश्चे'ति पुंसि घः । 'नपुंसके भावे क्त' इति सूत्राच्चेनभाव इत्यनुवृत्त्या भाव इत्यनेन वा व्रजनं व्रजः गतिः प्रापणं व्यापनम् इति व्युत्पत्त्या निष्क्रियत्वात्कर्तृत्वादिशून्यं यत् व्यापनं तस्माद् व्रज उच्यते । यद्वा । व्यापनकर्तृत्वाद् व्रजः । अत एवोत्तरश्लोके 'ब्रह्म व्यापकं व्रज उच्यते' इत्युक्तम् । अस्मिन् पक्षे पचाद्यच् । व्रजन्त्यस्मिन्मुक्ता इति तु सुवचं 'मुक्तानां परमागतिरि'ति, व्रजन्त्यनेनेति व्रज इति च 'सिद्धिदः सिद्धिसाधनः' इत्युक्तेः । अस्मिन् पक्षे करणे घ इत्यलम् । एवमुच्यते वेदान्तविज्ञैरिति शेषः ॥ १९ ॥ तर्हि स किं परं ब्रह्म ओमित्याह गुणातीतमिति । गुणातीतम्-गुणकार्येष्वभिमानशून्यं यत् व्यापकं परं ब्रह्म तदेव व्रजशब्देनोच्यते । तमेव व्रजं विशिनष्टि सदानन्दमित्युत्तरार्द्धेन । यत्सच्चिदानन्दरूपं परं ज्योतिः-स्वयंप्रकाशरूपं व्रजस्तदेव मुक्तानाम्-नारदादीनां अव्ययं पदम्—नित्यनिवासस्थानमित्यर्थः ॥ २० ॥ ननु किमिति नारदादयस्तत्र निवसन्तीत्याशंक्य श्रीकृष्णानुभवार्थमित्याशयेनाह तस्मिन्निति । उक्तलक्षणे व्रज एव सच्चिदानन्दमेवाङ्गं विशेषेण-सौंदर्याद्यतिशयेन गृह्णाति स सदानन्दाङ्गविग्रहः । 'सच्चिदानन्दरूपाय कृष्णाय, आनन्दमात्रकरपादमुखोदरादिः', इत्यादिश्रुतिस्मृतिभ्यां देहदेहिविभागशून्यः । न च कृष्णविग्रहस्यैवात्मत्वे सर्वान्तरत्वे कुतो न सर्वेषां तदपरोक्षतेति वाच्यम् , अज्ञानावृतशुक्तेः सामान्यतो भानेऽपि शुक्तिरूपविशेषाकारेणाप्रतीतिवत् । सदाद्यात्मना भानेऽपि साकारचिदानन्दात्मत्वेनाप्रतीतिसंभवात् । न चात्मनो बहुश्रुतिषु निराकारत्वप्रसिद्ध्या श्रीकृष्णस्य साकारत्वासिद्धिरिति वाच्यम्, निराकारशब्दस्य मायिकभौतिकाकारनिरासपरत्वात् । 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरमि'त्यादिश्रुतिश्रुताकारस्यानन्तानन्दवद्गुणोपसंहारन्यायेन सर्वत्रोपसंहरणीयत्वाच्चेत्युत्तरतन्त्रे विस्तरः । श्रीकृष्ण एवात्मारामश्चाप्तकाम इति प्रेमाक्तैः-प्रेमपूर्णैर्नारदादिभक्तैरनुभूयते । न कास्वन्यादौ । अतो व्रजभूमिरेव सर्वोत्कृष्टत्वात्सर्वदा संसव्येति भावः ॥ २१ ॥ ननु राधारमणस्य तस्य कुत आत्मारामत्वमित्याशङ्क्य राधारमणत्त्वादेव तत्त्वमिति व्युत्पत्त्या साधयति आत्मेति । रमणादेवासौ-श्रीकृष्णः वेदरहस्यविज्ञैः प्राज्ञैः ज्ञानिभिः । आत्मारामतया प्रोच्यते-प्रकर्षेण-सर्वात्मारामेषु विलक्षणत्वेन कथ्यते इत्यर्थः । चाप्तैरिति पाठे गूढवेदिभिः ज्ञानिभिः आप्तैः-प्रेमपूर्णैर्भक्तैश्च । तदुक्तं श्रीशुकाचार्यचरणैरुपक्रमे 'निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नम इति । अस्यार्थः निरस्तं साम्यमतिशयश्च यस्मात् यदपेक्षयाऽन्यस्य साम्यमतिशयश्च नास्ति तेन स्वात्मना राधसा-राधिकया स्वधामनि-व्रजे रंस्यते-रममाणाय आत्मारामाय नमः । कथंभूते स्वधामनि-ब्रह्मणि-व्यापके तदुक्तं राधाकृष्णभूषणे । राधसा—'राधिकयेत्यर्थः एकप्रकृतिकभिन्नप्रत्ययांतवाच्यमप्येकमेव, ईश्वरेशशब्दवत् । मघवन्मघवशब्दवच्च । राधधातुप्रकृतिकासुन्घञन्तयो राधस राधाशब्दयो राधावाचकत्वमिति ॥ २२ ॥ ननु गोचारणबालक्रीडादिरतस्य नवनीतादिचोरस्य गोपीजनवस्त्रापहारकस्य तस्य कुत आप्तकामत्वमित्याशङ्क्य तद्गवादीनां नित्यत्वादेवेति तत्त्वमित्यपि व्युत्पत्त्यैव साधयति । यद्वा आप्तकामशब्दस्यापि व्युत्पत्तिं दर्शयति कामास्त्विति । तस्य-श्रीकृष्णस्य वाञ्छिताः कामाः-संकल्पविषया ये

रहस्यं त्विदमेतस्य प्रकृतेः परमुच्यते। प्रकृत्या खेलतस्तस्य लीलाऽन्यैरनुभूयते ॥ २४ ॥
सर्गस्थित्यप्यया यत्र रजःसत्त्वतमोगुणैः। लीलैवं द्विविधा तस्य वास्तवी व्यावहारिकी ॥ २५ ॥
वास्तवी तत्स्वसंवेद्या जीवानां व्यावहारिकी। आद्यां विना द्वितीया न द्वितीया नाद्यगा क्वचित् ॥२६॥
आवयोर्गोचरेयं तु तल्लीला व्यावहारिकी। यत्र भूरादयो लोका भुवि माथुरमण्डलम् ॥ २७ ॥
अत्रैव व्रजभूमिः सा यत्र तत्त्वं सुगोपितम्। भासते प्रेमपूर्णानां कदाचिदपि सर्वतः ॥ २८ ॥
कदाचिद् द्वापरस्यान्ते रहोलीलाधिकारिणः। समवेता यदाऽत्र स्युर्यथेदानीं तदा हरिः ॥ २९ ॥
स्वैः सहावतरेत्स्वेषु समावेशार्थमीप्सिताः। तदा देवादयोऽप्यन्येऽवतरन्ति समन्ततः ॥ ३० ॥

गवादयस्ते नित्याः। ये च तैः सह सर्वे विहाराद्याः-सर्वा लीला धामादिकं च तेऽपि नित्याः। ततः-तत्कामादीनां नित्यत्वा-नित्यत्वादेवायम्-श्रीकृष्ण आप्तकामः-स्वत एव परिपूर्णकाम इत्यर्थः। तदुक्तं श्रीभागवतामृते 'नित्यां मे मथुरां विद्धि वनं वृन्दावनं तथा। यमुनां गोपकन्याश्च तथा गोपालबालकान् ॥' इति। जयति जननिवासः। 'वृन्दावनं परित्यज्य पदमेकं न गच्छति।' तथा च श्रुतिः 'सत्यकामः सत्यसंकल्प' इति ॥ २३ ॥ रहस्यमिति। इदम्-मयोक्तं रहस्यम्-व्रजलीलातत्त्वं तु प्रकृतेः-बहिरङ्गशक्तेः परमुच्यते। प्रकृतेः परत्वं च विवृतं श्रीकृष्णोपनिषदि श्रुतीनां वचनैः। तद्यथा 'पौरुषादीनि रूपाणि ज्ञातान्यस्माभिरच्युत। सुगुप्तं ब्रह्म तत्सर्वं स्वस्थं बुद्धं न ते हि नः ॥ ब्रह्मेति पठ्यमानाभिर्यद्रूपं निर्गुणं परम्। वाङ्मनोगोचरातीतं तत्तु न ज्ञायते कुतः ॥ आनन्दमात्रमिति यद्वदन्ति हि पुराविदः। तद्रूपं दर्शयास्माकमेतदेव वरो हि ते ॥ श्रुत्वैतद्दर्शयामास व्रजतत्त्वं परात्परम् ॥' इत्यादि तत्र द्रष्टव्यमिति। तयैव प्रकृत्या खेलतः-लीलां कुर्वतस्तस्य वेदान्तवेद्यस्य श्रीकृष्णस्य या लील-व्यावहारिकी साऽन्यैरेव जीवैः सांसारिकैरनुभूयते इत्यन्वयः ॥ २४ ॥ ननु सा कीदृशी लीला तत्राह सर्गेत्यर्द्धेन। यत्र-यस्यां सृष्ट्यादिरूपबहिरङ्गलीलायां रजःसत्त्वतमोगुणैर्विश्वस्य सर्गस्थित्यप्यया भवन्तीति सा। एवम्-व्रजनं व्याप्तिरित्याद्युक्तप्रकारेण तस्य श्रीकृष्णस्य द्विविधा लीला। एका वास्तवी द्वितीया व्यावहारिकी च ॥ २५ ॥ तयोर्लक्षणमाह। वास्तवीति। या वास्तवी लीला सा तत्स्वसंवेद्या-तेन कृष्णे स्वैर्भक्तैश्च सम्यक्-तत्सुखानुभवपूर्वकं वेदितुं योग्या। व्यावहारिकी लीला तु जीवानाम्-जीवैर्वेद्या। आद्याम्-वास्तवीमप्रकटनित्यलीलां विना द्वितीया-प्रकटा लीला न भवति। प्राकट्यस्य पूर्वसद्भावापेक्षकत्वादिति भावः। द्वितीया व्यावहारिकी लीला तु आद्यां वास्तवीं गच्छतीति तथाभूता क्वचिन्न भवति। तस्याः प्राकृतत्वादिति भावः। द्वितीयान्तपाठे-आद्यां वास्तवीं लीलां विना द्वितीया-व्यावहारिकी न संभवति। तर्हि किमिति शास्त्रेषु निरूपितेत्याशंक्याह द्वितीयामिति। द्वितीयाम्-व्यावहारिकीं लीलां विना न चाद्यगा-वास्तवी क्वचिदपि सूच्यत इत्यध्याहारः। निष्प्रपञ्चब्रह्मसूचनार्थं प्रपञ्च इव। बिम्बसूचनार्थं च प्रतिबिम्बमिव। वास्तवीसूचनार्थमेव सा निरूपितेति भावः ॥ २६ ॥ किञ्च। आवयोरिति। हे वज्र! आवयोस्तव मम च गोचरा-दृश्या, अधिकरणघान्ताट्टाप्। न तु 'चरेष्टः' शंक्यः। इयम्-विश्वोत्पत्त्यादिकारिणी श्रीकृष्णलीला तु व्यावहारिकी अस्ति। इयम्-व्यावहारिकी श्रीकृष्णलीला तु आवयोर्दृश्येत्यन्वयो वा। यत्र-यस्यां लीलायां भूरादयो लोकाः सन्ति। भुवि भूर्लोके च माथुरमण्डलमस्ति। अप्रकटमाथुरमण्डलव्यावृत्त्यर्थं भुवीति ग्रहणम् ॥ २७ ॥ व्यावहारिकीं लीलां निरूप्य वास्तवीं विस्तरेण निरूपयति अत्रेति। अत्रैव-व्यावहारिक्यां प्राकृतवत्प्रतीयमाने माथुरमण्डले एव सा-परमानन्दरूपा चिन्मयी व्रजभूमिरस्ति। यत्र-यस्यां व्रजभूमौ सुगोपितं यत् तत्त्वम्—श्रीकृष्णाख्यं तत् प्रेमपूर्णानां प्रेमभक्तानामेव। कदाचित्-नामसंकीर्तनादौ। सर्वतो-बहिरन्तरतो भासते। अपीति निश्चितमेवेत्यर्थः ॥ २८ ॥ तर्हि कदा तस्य सर्वदा साक्षाद्भानं तत्राह कदाचिदिति सार्द्धेन। यथेदानीमस्मदादयः समवेताः सन्ति। तथा कदाचित्-अष्टाविंशतिमे द्वापरस्यान्ते यदा रहोलीलाधिकारिणो-धराद्रोणादयः दण्डकमुन्यादयश्च साधकभक्ताः अत्र-व्रजभूमौ समवेताः-मिलिताः स्युस्तदा हरिः-गोलोकवासिश्रीकृष्णोपि ॥ २९ ॥ स्वैः-रहोलीलाधिकारिकगोपीगोपगवादिभिः सिद्धैः सहावतरेत्। कथंभूताः रहोलीलाधिकारिणः स्वेषु-गोलोकवासिषु समावेशार्थम्-प्रवेशार्थं हरिणा ईप्सिताः-वाञ्छिताः। यैः सहावतरत्स्वेषु समावेशार्थमीप्सितमिति च पाठे। यथेदानीम्-अस्मिन् द्वापरस्यान्ते। तथाष्टाविंशतितमे द्वापरस्यान्ते-तत्सन्ध्यांशे। यदा कदाचित् रहस्यलीलाधिकारिणः साधकभक्ताः अत्र समवेताः स्युस्तदा यैः-गोलोकवासिभिः सिद्धैः सहावतरत्सु एषु-रहोलीलाधिकारिषु तेषु सर्वेषु ईप्सितमर्थम्-स्ववाञ्छितलीलादिकं समावेश्य हरिरपि स्यात्-श्रीकृष्णोऽप्यवतरतीत्यर्थः। तैरिति च पाठे तदा तैः-रहोलीलाधिकारिभिः सहावतरत्सु एषु-देवाद्यवतारयादवादिष्वित्यर्थः। अस्मिन् पक्षे। हरिणा सह हरिपरिकरस्याप्यवतरणं ज्ञेयम्। अन्यत्समानम्। तद्वैव रहोलीलाधिकारिदेवादिभ्योऽन्ये ये देवगन्धर्वादयः आधिकारिकाः तेऽपि समन्ततः-स्वस्वलोकेभ्योऽवतरन्ति। स्वांशैरिति

१. वास्तवी अप्रकटलीलां विनापि भवति कदाचिद् व्यावहारिक्यां प्रत्यक्षापि भवतीति तृतीयचरणस्य निष्कर्षः। २. वास्तवी तु व्यावहारिकयामपि गच्छतीति चतुर्थचरणस्य निष्कर्षः।

सर्वेषां वाञ्छितं कृत्वा हरिरन्तर्हितोऽभवत् । तेनात्र त्रिविधा लोकाः स्थिता पूर्वं न संशयः ॥ ३१ ॥
नित्यास्तल्लिप्सवश्चैव देवाद्याश्चेति भेदतः । देवाद्यास्तेषु कृष्णेन द्वारिकां प्रापिताः पुरा ॥ ३२ ॥
पुनर्मौशलमार्गेण स्वाधिकारेषु चापिताः । तल्लिप्सूंश्च सदा कृष्णः प्रेमानन्दैकरूपिणः ॥ ३३ ॥
विधाय स्वीयनित्येषु समावेशितवांस्तदा । नित्याः सर्वेऽप्ययोग्येषु दर्शनाभावतां गताः ॥ ३४ ॥
व्यावहारिकलीलास्थास्तत्र यत्राधिकारिणः । पश्यन्त्यात्रागतास्तस्मान्निर्ज्जनत्वं समन्ततः ॥ ३५ ॥
तस्माच्चिन्ता न ते कार्या वज्रनाभ मदाज्ञया । वासयात्र बहून् ग्रामान् संसिद्धिस्ते भविष्यति ॥ ३६ ॥
कृष्णलीलानुसारेण कृत्वा नामानि सर्वतः । त्वया वासयता ग्रामान् संसेव्या भूरियं परा ॥ ३७ ॥
गोवर्द्धने दीर्घपुरे मथुरायां महावने । नन्दिग्रामे बृहत्सानौ कार्या राज्यस्थितिस्त्वया ॥ ३८ ॥
नद्यद्रिद्रोणिकुण्डादिकुञ्जान् संसेवतस्तव । राज्ये प्रजाः सुसंपन्नास्त्वं च प्रीतो भविष्यसि ॥ ३९ ॥
सच्चिदानन्दभूरेषा त्वया सेव्या प्रयत्नतः । तव कृष्णस्थलान्यत्र स्फुरन्तु मदनुग्रहात् ॥ ४० ॥

शेषः । तदुक्तं बृहद्ब्रह्मसंहितायां पञ्चरात्रे "वेदोऽयं वसुदेवाख्यो ब्रह्म-विद्या तु देवकी । नन्दस्तु परमानन्दो यशोदा मुक्तिरूपिणी ॥ स्वांशैरवतरन्त्येते श्रीकृष्णप्रीतिहेतवे ॥" इत्यादि ॥ ३० ॥

सर्वेषामित्यर्द्धकम् । सर्वेषाम्-त्रिविधजनानाम् तेनेत्यप्यर्द्धकम् । तेन-श्रीकृष्णावतारस्य त्रिविधजनापेक्षकत्वेन हेतुना । अत्र व्रजभूमौ त्रिविधा लोकाः-जनाः । 'लोकस्तु भुवने जने' इत्यमरः । त्वत्तः पूर्वं स्थिता अभवन्निति शेषः ॥ ३१ ॥ तान् त्रिविध-जनानेव दर्शयति नित्या इत्यर्द्धकेन । नित्याः-सिद्धाः गोलोकनिवासिगोपीगोपगवादयो मुख्याः । तल्लिप्सवः-तथातत्स्वरूपेच्छवो द्रोणधरादयो दण्डकमुन्यादयश्च साधकभक्ताः द्वितीयाः । आधिकारिकदेवाद्यवतारा यादवादयश्च तृतीया इति भेदात् त्रिविधाः । लीलान्ते तेषां स्वस्वाधिकारस्थितिप्रकारमाह देवाद्या इति सार्द्धद्वयेन । तेषु-त्रिविधजनेषु मध्ये ये देवांशाद्यास्ते श्रीकृष्णेन मथुरातो द्वारकां पुरैव प्रापिताः ॥ ३२ ॥ च पुनर्मौशलमार्गेण स्वाधिकारेषु आपिताः । तल्लिप्सूंश्चेति सार्द्धकम् । ततो गोलोकनिवासिनित्य-जनसदृशस्वरूपेच्छून् ध[1]राद्रोणादीन् द[2]ण्डकमुन्यादींश्च सदा प्रेमानन्दैकरूपिणो विधाय ॥ ३३ ॥ सद्योमुक्तिमर्यादया तानपि रहोलीलाधिकारिकान् कृत्वेत्यर्थः । सदाकृष्णः-सतो भक्तानासमन्तात्स्वस्मिन्नाकर्षतीति तथाभूतः श्रीनन्दनः स्वीयनित्येषु गोलो-कवासिषु तान् यदा सम्यक्-स्वकीयत्वेनावेशितवान् तदा-सर्वे-नित्याः गोलोकनिवासिनोऽपि अयोग्येषु-तदानींतनव्यावहारिक-लीलास्थजनेषु दर्शनाभावतां गता इति सार्द्धश्लोकान्वयः । यदेति पाठान्तरम् ॥ ३४ ॥ ननु तद्दर्शनार्थं देशान्तरादागता व्यावहा-रिकलीलास्था जनाः कुत्र गता इति चेत् तेऽपि तदानीं तानदृष्ट्वा लीलासुखानुभवाभावात्तत्रैव गता इत्याह व्यावहारिकलीलास्था इति । तान् द्रष्टुमागता व्यावहारिकलीलास्था जनास्तत्राधिकारिणः-रहोलीलायामधिकारिजनान् यस्मादत्र-व्रजे न पश्यन्ति तस्मादस्य व्रजस्य समन्ततो निर्ज्जनत्वम्-निर्गता जना यस्मात्तस्य भावस्तत्त्वमस्तीत्यर्थः । आगतानिति द्वितीयान्तपाठे रहोलीला-धिकारिविशेषणम् । तत्र लोकान्तरादागतानित्यर्थः । स्थिता इति पाठे त्वतिसुगमम् ॥ ३५ ॥

तस्मादिति । तस्मात्-व्रजस्य निर्ज्जनत्वाद्धेतोः । हे वज्रनाभ ते-त्वया चिन्ता-अत्रत्यजनविषयिका न कर्तुं योग्या । तर्हि किं कर्तव्यं तत्राह । मदाज्ञया अत्र-व्रजे बहून् ग्रामान् वासय । तेन ते-तव सम्यक्-मनोऽभिलषितपूर्विका सिद्धिः-चिन्ता-हानिरित्यर्थः ॥ ३६ ॥ कृष्णेति । कृष्णलीलानुसारेण नामानि-कृष्णजन्मनि षष्ठीपूजनात् 'छटीकरा' । श्रीराधाकृष्णयोर्विवाहसमये ग्रन्थिबन्धनात् 'गाँठ्याँली' । चतुर्मुखेन बालवत्सहरणात् 'चोमुँहा' इत्यादीनि तत्तन्नामानि कृत्वा सर्वतो ग्रामादीन् वासयता त्वया परा-सर्वोत्कृष्टा इयम्-सच्चिदानन्दरूपा व्रजभूमिः सुसेव्या-सम्यक्-श्रद्धापूर्वकं सेवितुं योग्या इत्यर्थः ॥ ३७ ॥ गोवर्द्धने इति । गोवर्द्धने प्रसिद्धे । दीर्घपुरे-डीघ इति ख्याते । बृहत्सानौ बरसानाँ इति ख्याते । अन्यत्सुगमम् ॥ ३८ ॥ नदीः-यमुनादीः । अद्रीन्-श्रीगोवर्द्धनादीन् । तद्द्रोणीश्च कुण्डानि-राधाकुण्डकृष्णकुण्डादीनि । कुञ्जान् सेवाकुञ्जादीन् । सम्यक्-श्रद्धापूर्वकं सेवतस्तव प्रजाः सुसंपन्नाः धान्यादिना सम्पन्नाः भविष्यन्ति । तेन च त्वमपीत्यन्वयः ॥३९॥ आशिषो ददुक्तं व्रजरहस्यं निगमयति सच्चिदानन्द-भूरिति द्वयेन । एषा अनिर्वचनीयमाहात्म्या । सच्चिदानन्दभूः कृष्णरूपा व्रजभूमिः । तदुक्तं भागवतामृते "स तु माथुरभू-रूपः परिच्छिन्नोऽप्यथाद्भुतः । स्फारः संकुचितश्च स्यात् कृष्णलीलानुसारतः ॥ प्रमदाशतकोटयोऽपि ममुर्यत्तत्किमद्भुतम् । अत्रै वाजाण्डमालापि पर्याप्तिमुपगच्छति ॥ वृन्दावनप्रतीकेषु याऽनुभूतैव वेधसा । अतः प्रभोः प्रियाणां च धाम्नश्च समयस्य च ॥ अविचिन्त्यप्रभावत्वात्तत्र किञ्चिन्न दुर्घटम् ॥" इत्यादि । यत्नतः-प्रेमिजनसेवनपूर्वकनामसंकीर्तनाद्युपायेनेत्यर्थः, सेवितुं

---

१. अधिकारिणः । २. साधकभक्तान् ।

वज्रसंसेवनादस्य उद्धवस्त्वां मिलिष्यति । ततो रहस्यमेतस्मात् प्राप्स्यसि त्वं समातृकः ॥ ४१ ॥

एवमुक्त्वा तु शाण्डिल्यो गतः कृष्णमनुस्मरन् । विष्णुरातोऽथ वज्रश्च परां प्रीतिमवापतुः ॥ ४२ ॥

इति श्रीस्कन्दपुराणेऽखिलेष्टश्रीमद्भागवतमाहात्म्ये शाण्डिल्योपदिष्टव्रजभूमिमाहात्म्यवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः

श्रीऋषय ऊचुः—शाण्डिल्ये तौ समादिश्य परावृत्ते स्वमाश्रमम् । किं कथं चक्रतुस्तौ तु राजानौ सूत तद्वद ॥ १ ॥

श्रीसूत उवाच—ततस्तु विष्णुरातेन श्रेणीमुख्याः सहस्रशः । इन्द्रप्रस्थात्समानाय्य मथुरास्थानमापिताः ॥ २ ॥

माथुरान् ब्राह्मणांस्तत्र वानरांश्च पुरातनान् । विज्ञाय माननीयत्वं तेषु स्थापितवान् स्वराट् ॥ ३ ॥

वज्रस्तु तत्सहायेन शाण्डिल्यस्याऽप्यनुग्रहात् । गोविन्दगोपगोपीनां लीलास्थानान्यनुक्रमात् ॥ ४ ॥

विज्ञायाऽभिधयाऽऽस्थाप्य ग्रामानावासयद्बहून् । कुण्डकूपादिपूर्तेन शिवादिस्थापनेन च ॥ ५ ॥

गोविन्दहरिदेवादिस्वरूपाऽऽरोपणेन च । कृष्णैकभक्तिं स्वे राज्ये ततान च मुमोद ह ॥ ६ ॥

प्रजास्तु मुदितास्तस्य कृष्णकीर्तनतत्पराः । परमानन्दसम्पन्नाः राज्यं तस्यैव तुष्टुवुः ॥ ७ ॥

योग्या । कृष्णस्थलानि तद्रासमण्डलादीनि । स्फुरन्त्वित्याशिषि लोट् ॥ ४० ॥ वज्रेति संबोधनम् । अस्याः-सच्चिदानन्दव्रजभूमेः । सम्यक्-प्रेमपूर्वकसेवनात् । ततः-उद्धवमिलनानन्तरमेव । रहस्यम्-व्रजभूमितत्त्वम् । एतस्मादुद्धवात् । मातरः-षोडशसाहस्रं श्रीकृष्णपत्न्यस्ताभिः सहितः । एतस्या इति पाठे व्रजभूमेः । ततः उद्धवात् ॥४१॥ एवमिति सूतोक्तिः । एवं वज्रनाभचिन्ताहान्युपायप्रकारकं व्रजरहस्यमुक्त्वा गतः पर्णशालामिति शेषः । कृष्णमनुस्मरन्नित्यस्यायं भावः । स्वस्य कृष्णभक्तत्वं द्योतयितुम् । यद्वा हरिस्मृतिः 'सर्वविपद्विमोक्षणमि'ति वज्रं स्मारयितुम् । यद्वा यथा कृष्णस्मरणेन मम स्वानन्दसिद्धिर्जाता तथैव व्रजभूमेः सच्चिदानन्दरूपत्वादस्यां तवापि कृष्णस्मरणेनैव राज्यसंसिद्धिर्नान्यथेति वज्रं सूचयितुमिति ॥ ४२ ॥

इति श्रीस्कन्दपुराणेऽखिलेष्टश्रीमद्भागवतचतुष्टयाध्यायमाहात्म्ये खाण्डलर्षिवंशोद्भवमथुरावसुदेवघट्टनिवासिपौराणिकश्रीमोहनदेवात्मजहरिहरदेवकृतायां वैष्णवानन्दिन्यां टिप्पण्यां प्रथमोऽध्यायः ॥ १ ॥

द्वितीये राज्यसंसिद्धिर्वज्रनाभस्य वर्ण्यते । हर्षश्च कृष्णपत्नीनां श्रीकालिन्द्युपदेशतः ॥ १ ॥

श्रीशाण्डिल्यगमनानन्तरम् । परीक्षिद्वज्रनाभौ यत्कृतवंतौ तदेव शौनकादय ऋषयः श्रीसूतं पप्रच्छुरिति व्यासोक्तिः । शाण्डिल्य इति । तौ-परीक्षिद्वज्रनाभौ-कर्मभूतौ समादिश्य-सम्यक्-स्वानुग्रहपूर्वकमाज्ञां दत्वा । स्वमाश्रमम् -आलस्यादिपरिहारकारणं तपःस्थानविशेषं पर्णशालामिति यावत् । परावृत्ते-गते सति । तौ-अतिप्रसिद्धौ । राजानौ-परीक्षिद्वज्रनाभौ कर्तृभूतौ । किं कर्म चक्रतुस्तच्च कथं-केन प्रकारेण चक्रतुस्तत्कर्म तत्प्रकारं च वदेत्यन्वयः ॥ १ ॥ तत्रोत्तरं वदन् श्रीसूत उवाचेति व्यासोक्तिः । तत इत्यादिना षट्केन । तुरेवार्थे । ततस्तु-शाण्डिल्यगमनानन्तरमेव । परीक्षिता सहस्रशः श्रेणीमुख्याः–तत्तद्व्यवसायिश्रेष्ठाः । इन्द्रप्रस्थात् सम्यगादरपूर्वकमानाय्य मथुरास्थानमापिताः–तान् मथुरायां स्थापितवानित्यर्थः ॥ २ ॥

किञ्च । माथुरानिति । तत्र-मथुरायाम् । तस्यामेव भवान् पूर्वमेव वर्त्तमानानित्यर्थः । ब्राह्मणांश्चातुर्वेदिनः । तत्रत्यान् वानरांश्च पुरातनानित्युभयेषां विशेषणम् । विज्ञायविशेषेण पुराणोक्तरीत्या ज्ञात्वा । स्वाराट्-राजा वज्र-राजा वज्रनाभस्तेषु उभयेषु माननीयत्वं स्थापितवान्-स्वप्रजासु तदुभयेषां पूज्यत्वमाज्ञप्तवानित्यर्थः ॥ ३ ॥ वज्र इति सार्द्धकम् । तत्सहायेन-श्रीपरीक्षित्सहायेन । शाण्डिल्यस्याप्यनुग्रहाच्च । लीलास्थानानि अनुक्रमात्-आनुपूर्व्यात् ॥ ४ ॥ विज्ञायेति । विज्ञाय-विशेषेण शास्त्रानुसारेण ज्ञात्वा । तानि च सेवाकुञ्जमहारासवंशीवटस्थलानीत्यभिधया-नाम्ना संस्थाप्य बहून् ग्रामान्-बृहत्सानुनन्दिग्रामादीन् ग्रामान् आ-सर्वतोऽवासयत्-तेषु जनान् स्थापितवानित्यर्थः । कुण्डेति सार्द्धकम् । कुण्डानि-राधाकुण्डकृष्णकुण्डादीनि । कूपाः-गोपकूपकृष्णकूपादयः । आदिशब्देन सुरालयारामप्रपादयस्तदेव पूर्तं तेन । शिवाः-चक्रेश्वरभूतेश्वरगोपेश्वरकामेश्वरादयस्तेषां मूर्त्तिस्थापनेन च । आदिशब्देन श्रीनन्दगृहे गोमयोपलस्थापनादिकर्मकर्त्र्यो वन्द्यानन्दीदेव्यादयो गृह्यन्ते ॥ ५ ॥ गोविन्दहरिदेवादिमूर्त्यारोपणेन च । आदिशब्देन बलदेवकेशवदेवौ ग्राह्यौ । स्वे राज्ये कृष्णैकभक्तिम्-कृष्णे अव्यभिचारिणीं भक्तिम्-नामसंकीर्तनादिलक्षणाम् । ततान-विस्तारितवान् । तेन च स्वयं मुमुदे-हर्षं प्राप । तस्य कृष्णभक्तिमाहात्म्यवृद्धिजोऽयं हर्ष इत्यस्मिन्नर्थे हशब्दः । वज्रस्य शाण्डिल्यशिष्यत्वात्परमकृष्णभक्तत्वं सूचयन्नाह हेति वा ॥ ६ ॥ एवं वज्रनाभस्य ग्रामादिवासनपूर्वकशिवादिमूर्तिस्थापनेन भगवद्भक्तिप्रवर्त्तनात्मकं कर्म दृष्ट्वा तत्प्रजास्तत्कर्मानुमोदनं चक्रुरित्याह प्रजास्त्विति । तस्य-वज्रस्य प्रजास्तु यतः कृष्णकीर्तनतत्पराः । अतः परमानन्दसम्पन्नाः । अतो मुदिताः सत्यः । तस्य-वज्रस्यैव राज्यम्-राजकर्म इत्यर्थः ।

एकदा कृष्णपत्न्यस्तु श्रीकृष्णविरहातुराः । कालिन्दीं मुदितां वीक्ष्य पप्रच्छुर्गतमत्सराः ॥ ८ ॥
श्रीकृष्णपत्न्य ऊचुः—यथा वयं कृष्णपत्न्यस्तथा त्वमपि शोभने । वयं विरहदुःखार्तास्त्वं न कालिन्दि तद्वद ॥ ९ ॥
तच्छ्रुत्वा स्मयमाना सा कालिन्दी वाक्यमब्रवीत् । सापत्न्यं वीक्ष्य तत्तासां करुणापरमानसा ॥ १० ॥
श्रीकालिन्द्युवाच—आत्मारामस्य कृष्णस्य ध्रुवमात्मास्ति राधिका । तस्या दास्यप्रभावेण विरहोऽस्मान्न संस्पृशेत् ॥ ११ ॥
तस्या एवांशविस्ताराः सर्वाः श्रीकृष्णनायिकाः । नित्यसंभोग एवास्ति तस्याः साम्मुख्ययोगतः ॥१२॥
सैव सः सा स एवास्ति वंशी तत्प्रेमरूपिका । श्रीकृष्णनखचन्द्रालिसंगाच्चन्द्रावली स्मृता ॥ १३ ॥
रूपान्तरं च गृह्णाना तयोः सेवातिलालसा । रुक्मिण्यादिसमावेशो मयात्रैव विलोकितः ॥ १४ ॥

तुष्टुवुः-श्लाघयामासुः । न तात्कालिकान्यराज्यमित्येवकारेणान्ययोगव्यवच्छेदो दर्शितः ॥ ७ ॥ तदेवं वज्रस्य पितृव्याज्ञासंमाननजातशाण्डिल्यानुग्रहराज्यसंसिद्ध्या सर्वचिन्ताहानिरुक्ता । इदानीं तस्यैव श्रीकृष्णपत्नीनां संसेवनेन तत्फलरूपश्रीहरिदासोद्धवसमागमादिकमाह यावदध्यायपूर्ति । एकदा-एकस्मिन् समये । कालिन्दीम्-श्रीकृष्णाम् । मुदिताम्-हर्षिताम् । वीक्ष्य-विशेषेण दत्तदृष्टितया दृष्ट्वा । गतमत्सराः—श्रीकालिन्द्युत्कर्षासहनरहिताः पप्रच्छुः ॥ ८ ॥ श्रीकृष्णपत्न्य ऊचुरिति सूतोक्तिः । यथेति । हे शोभने । तथा त्वमपि कृष्णपत्नी असि । कुतो वयं कृष्णविरहदुःखदुःखिताः-स्मः । त्वं न-त्वं तद्रहितासीत्यर्थः । तत्कारणं वद-कथय । येनास्माकमपि कृष्णविरहदुःखराहित्यं स्यादिति भावः । तदुपायं न जानामीति न वक्तव्यं यतः कलिं द्यति अवखण्डयतीति कलिन्दस्तत्पुत्र्यास्तव कुलपरंपरागतकलिनिरसनस्वभावत्वादस्मद्दुःखविदारणं तवैव हस्तगतमिति सूचयन्त्यः संबोधयन्ति कालिन्दीति ॥ ९ ॥ तदिति सूतोक्तिः । तत्-कृष्णपत्नीवाक्यं श्रुत्वा । अहो प्रभुपत्न्योऽपि मुह्यन्तीति स्मयमानेषद्धसितानना । सा-श्यामरसनिमग्ना श्रीकृष्णा । यतस्तासाम्-कृष्णपत्नीनाम् । तत्-अतिप्रसिद्धम् । सापत्न्यम्-सपत्नीभावम् । वीक्ष्य विशेषेण-अन्तर्भावेण दृष्ट्वा । मत्पतेरेताः पत्न्यो विरहार्ता मा भवन्त्विति करुणापरमानसा-करुणा एव परं केवलं यस्मिन्नेवंभूतं मानसं-हृदयस्याः । अतो वाक्यमब्रवीदित्यन्वयः । सा स्मयमाना सती वाक्यमब्रवीदित्यन्वयो वा । तत्र सापत्न्यमित्यादि श्रीकृष्णपत्नीवाक्यश्रवणे हेतुः । सारल्यमिति पाठान्तरम् ॥ १० ॥ श्रीकालिन्दी उवाचेति सूतोक्तिः । कालिन्दीवाक्यान्येव दर्शयति । आत्मारामस्येत्यादिसप्तभिः । आत्मारामस्य-आत्मन्येव रमणशीलस्य । श्रीकृष्णस्य-देहदेहिविभागशून्यत्वेन सच्चिदानन्दविग्रहस्यात्मैव राधिकेति ध्रुवम्-निश्चितमेतत् । तस्याः-श्रीराधिकायाः । अस्मानिति बहुवचनम् । तत्तु रुक्मिण्यादिसप्तमहापट्टमहिषीसाहित्याभिप्रायेण । तासामपेक्षया स्वस्य गुर्वीत्वमाननेन वा । अस्मान्न संस्पृशेदिति संभावनायां लिङ् । स्पर्शस्य संभावनाऽपि नास्तीत्यर्थः । अनेन युष्माकं तु तद्दास्याभावाच्छ्रीकृष्णविरहः संस्पृशेदेवेति ध्वनितम् । मामिति पाठे तु सुगमम् ॥ ११ ॥

किञ्च । तस्या इति । यद्यपि श्रीकृष्णनायिकाः सर्वाः यूयं वयं च । तस्याः श्रीराधिकाया एव अंशविस्ताराः—अंशरूपाः स्मः । तथापि तस्याः—श्रीराधिकायाः साम्मुख्ययोगतः—दास्ययोगेन । अस्माकमेव नित्यसंभोगः—नित्यं श्रीकृष्णरहस्यक्रीडासुखमस्ति । न तु युष्माकं श्रीराधासाम्मुख्ययोगाभावादिति भावः । आसीदिति पाठे तु सुगमम् । यतः सर्वाः यूयं वयं च श्रीराधिकांशविस्ताराः । अतस्तद्दास्यप्रभावेण सर्वासामस्माकं पूर्वं द्वारकायां श्रीकृष्णेन नित्यसंभोग आसीदेवेत्यनेन तदानीं तासां श्रीराधारूपकृष्णदास्याभावात् श्रीकृष्णेन नित्यसंभोगाभावः सूचितः ॥ १२ ॥ ननु कथं तव राधिकादास्यमात्रेणैव तत्प्रियप्राप्तिर्यया तव तेन नित्यसम्भोग इति चेत् तयोः स्वरूपज्ञानादिति तत्स्वरूपमाह सेति । यद्वा ननु पूर्वं द्वारकायां श्रीराधादास्यं विनापि तत्प्रियदास्यमात्रादेव कथं सर्वासामस्माकं तेन नित्यसंभोग आसीत् तत्राह सेति । यद्वा ननु राधासाम्मुख्ययोगस्तु पूर्वमपि नास्माकमभूत् कथमुच्यते त्वया साम्मुख्ययोगतोऽस्माकं कृष्णेन नित्यविहार इत्याशंक्याह सेति । यद्वा राधाकृष्ण इति नामभेदेन विख्यातमपि तयोर्गौरश्यामतेजसोर्द्वैविध्यं वस्तुतस्त्वैक्यमेवेत्याह । सेति पादेन । सा-राधैव सः-श्रीकृष्णः । सः-श्रीकृष्ण एव सा-राधास्ति । तदेवोक्तं श्रीसदाशिवेन 'एक एवमभूद् द्वेधा राधामाधवरूपकमि'ति । एवं श्रीराधाकृष्णयोः स्वरूपं निरूप्य तत्प्रेमरूपत्वाद्वंशीस्वरूपमपि निरूपयति वंशीति द्वितीयपादेन । वंशी तु तयोः—श्रीराधाकृष्णयोः प्रेम—परस्परस्नेहस्तं रूपयति निरूपयति, प्रवर्तयतीति यावत् तादृशी । सैव वंशी चन्द्रावली नाम गोपी अभूदिति सहेतुकमाह । श्रीकृष्णेति । सा च वंशी । रूपान्तरम्-प्रतिपक्षयूथेश्वरीरूपं गृह्णाना श्रीकृष्णहस्तनखचन्द्रालिसङ्गाद्धेतोश्चन्द्रावली स्मृता । कृष्णभक्तैरिति शेषः ॥ १३ ॥

तस्याः रूपान्तरग्रहणे हेतुमाह । तयोः—श्रीराधाकृष्णयोः सेवायामतिलालसा यस्या इति । सेवा चात्र द्वयो रसपोषणरूपा ज्ञेया । प्रातिपक्ष्यमन्तरा ईर्ष्यमाना भावेन रसपोषणानुपपत्तेः । किञ्च रुक्मिण्यादिसमावेश इत्यर्द्धेन । अत्रैव-श्रीराधाकृष्णपरस्परप्रेमनिरूपकवंश्यवतारचन्द्रावल्यामेव । रुक्मिण्याद्यष्टमहापट्टमहिषीणामपि समावेशः-सम्यक्-स्वरूपज्ञानपूर्वकमावेशः-प्रवेशो मया पूर्वं विलोकितो दृष्टः । यद्वा एवं प्रासङ्गिकं समाप्य प्रकृतं वदन्ती तावद्रुक्मिण्याद्यष्टमहापट्टमहिष्यः किंस्वरूपाः कुत्र च गता इत्याशङ्क्य ता अपि राधांशत्वाद्राधायामेव लीना इत्याह । रुक्मिण्यादिसमावेश इत्यर्द्धेन । अत्रैव श्रीराधायामेव ।

युष्माकमपि कृष्णेन विरहो नैव सर्वतः। किन्तु एवं न जानीथ तस्माद्व्याकुलतामिताः ॥ १५ ॥
एवमेवात्र गोपीनामक्रूरावसरे पुरा। विरहाभास एवासीदुद्धवेन समाहितः ॥ १६ ॥
तेनैव भवतीनां चेद्भवेदत्र समागमः। तर्हि नित्यं स्वकान्तेन विहारमपि लप्स्यथ ॥ १७ ॥
श्रीसूत उवाच—एवमुक्तास्तु ताः पत्न्यः प्रसन्नां पुनरब्रुवन्। उद्धवालोकनेनात्मप्रेष्ठसंगमलालसा ॥ १८ ॥
श्रीकृष्णपत्न्य ऊचुः—धन्यासि सखि कान्तेन यस्या नैवास्ति विच्युतिः।
यस्ते स्वार्थसंसिद्धिस्तस्या दास्यो बभूविम ॥ १९ ॥
परन्तूद्धवलाभे स्यादस्मत्सर्वार्थसाधनम्। तथा वदस्व कालिन्दि तल्लाभोऽपि यथा भवेत् ॥ २० ॥
श्रीसूत उवाच—एवमुक्ता तु कालिन्दी प्रत्युवाचाथ तास्तथा। स्मरन्ती कृष्णचन्द्रस्य कलाषोडशरूपिणी ॥ २१ ॥

शेषं पूर्ववत्। अनेन रुक्मिण्याद्यष्टमहापट्टमहिषीणां श्रीराधांशत्वात् श्रीराधाद्वारा कृष्णप्राप्तिः सूचिता। तया च तासां तद्विरहहानिश्च ध्वनिता। राज्ञीभ्य एतत्सर्वमुपदेशादिकं कालिन्द्याः साक्षादधिदैवरूपेणेति बोद्धव्यम्। यद्वा वेदे हिता 'आपोऽब्रुवन्नि'त्यादि-श्रुतिदर्शनात् सर्वेषामभिमानिन्यो देवताः सन्तीति सिद्धान्तितमतः कालिन्दीसरिदभिमानिदेवतारूपेणेति बोद्धव्यम् ॥ १४ ॥ ननु रुक्मिण्यादीनामिव श्रीकृष्णविरहाभावोऽस्माकमपि किमिति न स्यात् तत्राह युष्माकमिति। युष्माकमपि श्रीकृष्णेन विरहः सर्वतो बहिरन्तरतो नैवास्ति। युस्माकं राधांशत्वात् राधायाश्च कृष्णात्मत्वादिति भावः। अनेन विरहाभास एवोक्तः। तर्हि कथमस्माकमतिवैकल्यं तत्राह। किन्त्विति-तत्कारणं शृणुतेत्यर्थः। एवं श्रीराधागोपालस्वरूपज्ञानपूर्वकश्रीराधादास्यप्रभावादिकं स्वस्य विरहाभावं च यूयं न जानीथ। तस्मात् तदज्ञानाद्धेतोः व्याकुलतामिताः प्राप्ताः। वस्तुतो विरहो नास्तीत्यर्थः। यूयमिति पाठान्तरम् ॥ १५ ॥ किञ्च। एवमिति। एवमेव यथा युष्माकं तथैवेत्यर्थः। अत्र वृन्दावने। अक्रूरावसरे तदागमनसमये इत्यर्थः। गोपीनामपि विरहाभास एवासीत्। न तु पूर्णविरह इत्येवकारार्थः। स विरहाभास उद्धवेन समाहितः सम्यक् श्रीराधागोपालस्वरूपनिरूपणपूर्वकप्रियसन्देशकथनप्रकारेण पृथव्यामाक्षिप्त इत्यर्थः। अनेनोद्धवद्वारा गोपीनां श्रीकृष्णरहस्य-क्रीडाप्राप्तिः सूचिता। समाहिता इति पाठे गोपीनां विशेषणम्। सावधानचित्ताः कृताः। समाधिं प्रापिता इति वा ॥ १६ ॥

ननु तथाऽस्माकमपि कथं श्रीकृष्णरहस्यक्रीडानित्यप्राप्तिः स्यात्। तत्राह तेनेति। तेन-उद्धवेनैव। भवतीनामपि चेत् यदि अत्र-वृन्दावने समागमो भवेत्। तर्हि यूयमपि स्वप्रियपतिना श्रीकृष्णेन। विहारं रहस्यक्रीडाम्। नित्यमेव लप्स्यथ प्राप्स्यथ इत्यन्वयः ॥ १७ ॥ एवमिति सूतोक्तिः। एवं श्रीराधादास्येन स्वस्वरूपज्ञानपूर्वकोद्धवसमागमोपायाद्युपदिष्टप्रकारेणोक्तास्ताः सकला विकला अबलाः श्रीरोहिण्याद्याः षोडशसाहस्रं श्रीकृष्णपत्न्यः। प्रसन्नां कालिन्दीमिति विशेष्याध्याहारः। श्रीकृष्णतेजोऽ-धिष्ठानसूर्यतनयां श्रीकृष्णां पुनरब्रुवन्-धन्यवाददानपूर्वकं पुनः प्रश्नमकुर्वन्नित्यर्थः। बहुवचनान्तपाठे पत्नीनां विशेषणम्। तत्र कालिन्दीमिति कर्माध्याहारः। कथंभूताः उद्धवालोकनेन-तद्दर्शनेन स्वात्मप्रेष्ठस्य यः संगमस्तस्मिन् लालसाऽतिस्पृहा यासां ता इति हेतुगर्भविशेषणम् ॥ १८ ॥ श्रीकृष्णपत्नीवाक्यान्येव दर्शयति धन्येति द्वयेन। सखित्वेन त्वत्तोऽस्मद्दुःखनिवृत्तिरुचितैवेति सूचयन्त्यः सम्बोधयन्ति सखीति-हे कालिन्दि। यस्यास्तव कान्तेन-सर्वसुखानां पर्य्यवसानास्पदेन स्वपतिना श्रीकृष्णेन विच्युति-र्वियोगो नास्त्यतस्त्वं धन्यासि। यतो-यस्याः सकाशात् ते-तव। स्वार्थस्य-कृष्णेन नित्यविहारस्य। संसिद्धिः-सम्यक् प्राप्तिस्तस्याः-श्रीराधिकाया दास्यो वयमपि बभूविम इति 'छन्दसि लुङ् लङ् लिट' इति वर्तमाने भविष्यति वा लिट् ॥ १९ ॥ परन्त्विति। किन्तु-वयं किञ्चित्प्रार्थयाम इत्यर्थः। उद्धवलाभेऽस्मत्सर्वार्थसाधनम्-सर्वार्थसिद्धिः स्यात्। अतो यथा नः-अस्माकं तल्लाभो भवेत् तथा वदस्वेत्यन्वयः। उद्धवलाभे यथाऽस्मत्सर्वार्थसाधनं स्यात्। तथाऽस्मान् वदस्वेति। 'भासनोपसम्भाषे'ति सूत्रेण वदधातो-रात्मनेपदम्। यथा तल्लाभः उद्धवलाभोऽपि भवेत्। तथा चास्मान् वदस्वेत्यन्वयो वा। 'तथोपदिश नो देवी'ति पाठान्तरम् ॥ २० ॥ एवं धन्येत्याद्युक्तप्रकारेणोक्ता कालिन्दी-स्वनाम्नैव परदुःखविदारणसमर्था श्रीकृष्णा यतः श्रीकृष्णचन्द्रस्य कलाषोडशरूपिणी अतस्ताः रोहिण्याद्या अपि तथा कृष्णकलात्वेन स्मरन्ती सती। यद्वा तथा तासां विरहदुःखं स्मरन्ती सती। यद्वा तथा तासामुद्धवमेलनप्रकारं स्मरन्ती सती। अथ कार्त्स्न्येन। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।' इत्यमरः। ताः प्रत्युवाचेत्यन्वयः। यद्वा एवमुक्ता कालिन्दी। यतः कलाषोडशरूपिणी षोडशकलापूर्णा इत्यर्थः। अतः कृष्णचन्द्रस्य कृष्णचन्द्रं स्मरन्ती सती। अधीगर्थदयेशां कर्मणी'ति कृष्णचन्द्रस्येति कर्मणि षष्ठी।' यथा कृष्णपत्नीभिः पृष्टा तथा अथ कार्त्स्न्येन ताः प्रत्युवाचेत्यन्वयः। यद्वा एवमुक्ता कालिन्दी तु कृष्णचन्द्रं स्मरन्ती सती यथा तासामुद्धवसमागमः स्यात् तथा तं प्रकारं अथ कार्त्स्न्येन ताः कृष्णवियोगेन तनुमात्रावशिष्टाः सपत्नीः प्रत्युवाच। तत्र हेतुः कलाषोडशरूपिणीति कलानां षोडश कलाषोडश षोडशोपलक्षितं षोडशसहस्रं रोहिण्याद्याः रूपं यस्याः सा। 'कलां षोडशरूपिणीमि'ति च पाठे श्रीराधिकाम्। तथेत्यत्र तदेति पाठान्तरेत्वति-सुगमम् ॥ २१ ॥ कालिन्दीवाक्यान्येव दर्शयति। साधनभूमिरित्यादिषड्भिः व्रजता-स्वधाम गच्छता श्रीकृष्णेन या बदरी-

साधनभूमिर्बदरी व्रजता कृष्णेन मन्त्रिणे प्रोक्ता। तत्रास्ते स तु साक्षात् तद्वयुनं ग्राहयँल्लोकान् ॥ २२ ॥
फलभूमिर्व्रजभूमिर्दत्ता तस्मै पुरैव सरहस्यम् । फलमिह तिरोहितं सत् तदिहेदानीं स उद्धवोऽलक्ष्यः ॥ २३॥
गोवर्द्धनगिरिनिकटे सखीस्थले तद्रजःकामः । तत्रत्याङ्कुरवल्लीरूपेणास्ते स उद्धवो नूनम् ॥ २४ ॥
आत्मोत्सवरूपत्वं हरिणा तस्मै समर्पितं नियतम् । तस्मात्तत्र स्थित्वा कुसुमसरःपरिसरे सवज्राभिः॥ २५ ॥
वीणावेणुमृदङ्गैः कीर्तनकाव्यादिसरससङ्गीतैः । उत्सव आरब्धव्यो हरिरतलोकान् समानाय्य ॥ २६ ॥
तत्रोद्धवावलोको भविता नियतं महोत्सवे वितते ।
यौष्माकीणामभिमतसिद्धिं सविता स एव सवितानाम् ॥ २७ ॥

श्रीसूत उवाच—इति श्रुत्वा प्रसन्नास्ताः कालिन्दीमभिवन्द्य तत् । कथयामासुरागत्य वज्रं प्रति परीक्षितम् ॥ २८ ॥
विष्णुरातस्तु तच्छ्रुत्वा प्रसन्नस्तद्युतस्तदा । तत्रैवागत्य तत्सर्वं कारयामास सत्वरम् ॥ २९ ॥
गोवर्द्धनाददूरेण वृन्दारण्ये सखीस्थले । प्रवृत्तः कुसुमाम्भोधौ कृष्णसंकीर्तनोत्सवः ॥ ३० ॥

बदर्य्याश्रमोपलक्षिता भूमिः सा साधनभूमिरिति मन्त्रिणे-श्रीमदुद्धवाय प्रोक्ता प्रकर्षेण युक्तिपूर्वककथनेनोक्तैव । तद्द्वारा तत्रत्यजनोद्धरणाय न तु तपस्तप्तुं तस्मै दत्तेति भावः । तदनन्तरं सः हरिदासोद्धवस्तु लोकान् तत्रत्यसाधकभक्तजनान् तद्वयुनम्-श्रीकृष्णविषयकं ज्ञानं ग्राहयन् । तत्र साधनभूमिबदर्य्याश्रमे साक्षात् दृश्य एवास्ते इत्यन्वयः ॥ २२ ॥ ननु साधनभूमिरित्युक्तत्वात् काचित्फलभूमिरपि स्यादेव सा का कस्मै च दत्तेत्याशङ्कयाह फलभूमिरिति । नित्यवृन्दावनविहारिणा श्रीकृष्णेन । साधनभूमिबदर्य्याश्रमकृततपःफलभूमिर्या व्रजभूमिः सा तु तस्मै परमप्रेमिणे उद्धवाय निवस्तुं सरहस्यम् स्वरासक्रीडास्थलादिज्ञानसहितं यथा स्यात्तथा पुरैव दत्ता । उद्धवस्य फलभूमिरेव योग्या । तस्य चरमशरीरित्वादिति भावः । ननु श्रीमानुद्धवस्तत्र केन रूपेणास्ते । तत्राह फलमिति । इह व्रजभूमौ । सत् सनातनम् । फलम् श्रीकृष्णाख्यम् । तिरोहितम् अन्तर्द्धाय स्थितमित्यर्थः । तत् तस्मात् । व्रजभूमावेव सनातनफलाभिलाषी श्रीमदुद्धवोऽपि अलक्ष्य आस्ते-अदृश्य एव स्थित इत्यर्थः ॥ २३ ॥

ननु तर्हि कथमस्माकमत्र तद्दर्शनं स्यात् तत्राह । गोवर्द्धनगिरिनिकटे इति । कृष्णसखीनां गोपीनाम् । यत् स्थलं तस्मिन् । यतस्तद्रजःकामः-गोपीचरणकमलरजोऽभिलाषी । 'आसामहो चरणरेणुजुषामहं स्यामि'त्युक्तेः । अतस्तत्रत्याङ्कुरवल्लीरूपेण सखीस्थलभवाङ्कुरवल्लीरूपेण स्थित इति नूनम्-निश्चितमेव नात्र संदेहः कार्य्य इत्यर्थः ॥ २४ ॥ ननु कुतस्तस्याङ्कुरवल्लीरूपधारणे शक्तिर्जाता तत्राह आत्मोत्सवरूपत्वमित्यर्द्धेन । हरिणा-भक्तमनोहारिणा श्रीकृष्णेन नियतं निश्चलमात्मोत्सवरूपत्वम्-स्वस्योत्सवरूपत्वम् । यद्वा आत्मनः-उद्धवस्य उत्सवो यस्मात् तद्रूपत्वम् । तस्मै-श्रीमदुद्धवाय समर्पितम्-सम्यक् कृपापूर्वकं दत्तम् । अतस्तस्य भगवद्रूपत्वेन सर्वभगवद्रूपवृन्दावनभववृक्षाङ्कुरवल्लीरूपधारणसामर्थ्यं जातमिति भावः । उक्तं च भगवता श्रीकृष्णेन 'नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुरि'ति । तर्हि कस्तस्य प्राप्त्युपायस्तत्राह तस्मादिति सार्द्धेन । तस्मात्-श्रीमदुद्धवस्याङ्कुरवल्लीरूपेण स्थितत्वात् कुसुमसरःपरिसरे-कुसुमसरसः समीपे 'पर्य्यन्तभूः परिसर' इत्यमरः । सवज्राभिः-वज्रनाभेन सह वर्तमानाभिर्युष्माभिः । तत्र-सखीस्थले स्थित्वा ॥ २५ ॥ हरिरतलोकान्-कृष्णकीर्तनपरान् भक्तजनान् सम्यगादरपूर्वकमानाय्य । वीणावेणुमृदङ्गैर्वाद्यैः सह यानि कीर्तनकाव्यादिसरससंगीतानि-कीर्तनं च काव्यं च कीर्तनकाव्ये ते आदिर्येषां नाटकनिबन्धादीनां ते कीर्तनकाव्यादयस्तेषां यानि रसैः-शृङ्गारादिभिः सह वर्तमानानि संगीतानि सम्यक्-ग्राममूर्छनादिप्रकारेण गानानि तैः तत्र-कीर्तनम्-कृष्णविषयकसंकीर्तनम् । काव्यं नाम 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थावि'ति वामनः । 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापी'ति काव्यप्रकाशकारः । कविवाङ्निर्मितिः काव्यमिति कर्णपूरः । उत्सव आरम्भितुं योग्य इत्यन्वयः ॥ २६ ॥ ततः किं भविष्यति तत्राह । तत्र-तस्मिन् श्रीकृष्णनामसंकीर्तनरूपे महोत्सवे वितते सति । उद्धवावलोकः-उद्धवदर्शनम् । नियतम्-निश्चितमेव भविता-भविष्यति । भावीति पाठान्तरम् । सः-उद्धव एव । युष्माकमियम्-यौष्माकीणा ताम् । सवितानाम्-विस्तारसहितामभिमतसिद्धिम्-मनोऽभिलाषितप्राप्तिम् । सविता-जनयिष्यतीत्यन्वयः ॥ २७ ॥ श्रीसूत उवाचेति व्यासोक्तिः । इत्येवं-साधनभूमिरित्यादिप्रकारकं श्रीकालिन्दीकथनं श्रुत्वैव प्रसन्नास्ताः-श्रीकृष्णपत्न्यः । कालिन्दीमभिवन्द्य-नमस्कृत्य । आगत्य च प्रासादमिति शेषः । तत्-कालिन्दीकथनं वज्रं परीक्षितं च प्रति कथयामासुरित्यन्वयः ॥ २८ ॥ विष्णुरात इति । विष्णुरातः-श्रीपरीक्षित् । तुकाराद्वज्रनाभोऽपि तत्-श्रीकालिन्द्युपदिष्टोद्धवप्राप्त्युपायरूपमातृकथनं श्रुत्वा प्रसन्नः सन् । तद्युतस्ताभिर्युतः । तदैव-तस्मिन्नेव समये । तत्रैव-सखीस्थले एवागत्य यच्छ्रीकालिन्द्युपदिष्टश्रीकृष्णकीर्तनमहोत्सवादिकं तत्सर्वं यथा स्यात्तथा कारयामासेत्यन्वयः ॥ २९ ॥ तत्रापि क्व कारयामासेत्यपेक्षायां तत्स्थलं दर्शयन् तत्रैव संकीर्तनमहोत्सवप्रवृत्तिं संनिरूपयति गोवर्द्धनादिति । ततश्च वृन्दारण्ये तत्रापि गोवर्द्धनसमीपे एव वर्तमाने सखीस्थले तत्रापि कुसुमसरसि तत्तीर इत्यर्थः । कृष्णसंकीर्तनोत्सवः प्रवृत्तः 'प्रपन्न' इति पाठे प्राप्त इत्यर्थः ॥ ३० ॥ तमेव वर्णयति वृषेति । कीर्तनश्रिया हेतुना । वृषभा-

वृषभानुसुताकान्तविहारे कीर्तनश्रिया। साक्षादिव समावृत्ते सर्वेऽनन्यदृशोऽभवन् ॥ ३१ ॥
ततः पश्यत्सु सर्वेषु तृणगुल्मलताचयात्। आजगामोद्धवः स्रग्वी श्यामः पीताम्बरावृतः ॥ ३२ ॥
गुञ्जामालाधरो गायन् वल्लवीवल्लभं मुहुः। तदागमनतो रेजे भृशं संकीर्तनोत्सवः ॥ ३३ ॥
चन्द्रिकागमतो यद्वत् स्फाटिकाट्टालभूमणिः। अथ सर्वे सुखाम्भोधौ मग्नाः सर्वं विसस्मरुः ॥ ३४ ॥
क्षणेनागतविज्ञाना दृष्ट्वा श्रीकृष्णरूपिणम्। उद्धवं पूजयांचक्रुः प्रतिलब्धमनोरथाः ॥ ३५ ॥

इति श्रीस्कन्दपुराणेऽखिलेष्टश्रीमद्भागवतमाहात्म्ये द्वितीयोऽध्यायः।

## अथ तृतीयोऽध्यायः

श्रीसूत उवाच—अथोद्धवस्तु तान् दृष्ट्वा कृष्णकीर्तनतत्परान्। सत्कृत्याथ परिष्वज्य परीक्षितमुवाच ह ॥ १ ॥
श्रीउद्धव उवाच—धन्योऽसि राजन् कृष्णैकभक्त्या पूर्णोऽसि नित्यदा। यत्त्वं निमग्नचित्तोऽसि कृष्णसंकीर्तनोत्सवे ॥ २ ॥
कृष्णपत्नीषु वज्रे च दिष्ट्या प्रीतिः प्रवर्तिता। तवोचितमिदं तात कृष्णदत्तांगवैभव ॥ ३ ॥
द्वारकास्थेषु सर्वेषु धन्या एते न संशयः। येषां व्रजनिवासाय पार्थमादिष्टवान् प्रभुः ॥ ४ ॥

नुसुतायाः-श्रीराधायाः कान्तः-प्रियः श्रीकृष्णस्तस्य विहारे नृत्ये। साक्षादिव-प्रत्यक्षत इव। सम्यक्-वीणावेणुमृदङ्गादिवादनोत्कृष्टप्रकारेण आ-सर्वतो वृत्ते-जाते सति सर्वे-परीक्षिद्वज्रनाभादयः। अनन्यादृशः-न नामसंकीर्तनादन्यत्र देहादौ दृक् ज्ञानं येषां ते तथाभूता अभवन्नित्यन्वयः ॥ ३१ ॥ ततो यद्वृत्तं तदाह तत इति सार्द्धेन। ततस्तदनन्तरमेव सर्वेषु पश्यत्सु सत्सु। तृणादिसमूहादुद्धव आजगामेत्यन्वयः। तमेव विशिनष्टि स्रग्वीति-पुष्पमालाधारी श्यामः पीताम्बरावृत इति त्रिभिर्विशेषणैः सतडिदिन्द्रधनुर्घनश्यामत्वद्योतनम् ॥ ३२ ॥ गुञ्जामालाधर इत्यनेन तस्य कृष्णवेषधारित्वं सूचितम्। गोपीप्रियम्-श्रीकृष्णम्। मुहुर्वारं वारम्। तदागमनतः-उद्धवागमनेन संकीर्तनोत्सवः। यद्वा तत्रस्थो जन इत्यर्थः। भृशमत्यन्तम् रेजे-शुशुभे ॥ ३३ ॥

तत्र दृष्टान्तमाह चन्द्रिकेत्यर्द्धेन। यथा समुद्रोद्भूतचन्द्रस्य चन्द्रिकागमनेन स्फटिकमणिरचिताट्टालभूमणिः शोभते तथेति। अत्र प्रेमरससमुद्रोद्भूतोद्धव एव चन्द्रस्तत्कान्तिरेव चन्द्रिका वज्रादिमण्डली एव स्फाटिकाट्टालभूस्तन्मणिरिव तत्रस्थो जन इति यथायथमूह्यम्। भाति स्फाटिकाट्टालभूर्यथा। भाति स्फाटिकाट्टालभूमिका। स्फाटिकाट्टालगोपुरमिति च पाठान्तरेषु सुगमम्। अथेत्यर्द्धकम्, उद्धवगमनानन्तरम्। मग्नाः संतः। सर्वम्-देहगेहादिकम् ॥ ३४ ॥ क्षणेनेति। क्षणेनागतं प्राप्तं विज्ञानं हरिदासोऽयमुद्धव इति तत्साक्षात्कारो येषां ते वज्रादयः। उद्धवं श्रीकृष्णरूपिणं दृष्ट्वा। प्रतिलब्धस्तत्प्राप्तिरूपो मनोरथो यैस्तथाभूतास्तं पूजयांचक्रुरर्घ्यपाद्यादिभिरिति शेषः ॥ ३५ ॥

इति श्रीस्कन्दपुराणेऽखिलेष्टश्रीमद्भागवतमाहात्म्ये खाण्डलर्षिवंशोद्भवमथुरावसुदेवतीर्थनिवासिपौराणिक श्रीमोहनदेवात्मजहरिहरदेवकृतायां वैष्णवानन्दिन्यां टिप्पण्यां द्वितीयोऽध्यायः ॥ २ ॥

श्रीमद्भागवतं शास्त्रं तृतीये चोद्धवेन वै। वज्राय श्रावितं तेन कृष्णप्राप्तिर्निगद्यते ॥ १ ॥

तदेवं द्वितीयाऽध्याये श्रीहरिदासोद्धवसमागमादिकमुक्तम्। तदनन्तरं यद्वृत्तं तच्छ्रीसूत उवाचेति व्यासोक्तिः। अथेति। अथ-पूजनानन्तरम्। उद्धवस्तु परीक्षिदादीन् श्रीकृष्णकीर्तनतत्परान् दृष्ट्वा। अहो यूयमेव सफलजन्मभाज इति वचनेन सत्कृत्य। अथ परिष्वज्य देहेनालिङ्ग्य च। वैष्णवे बन्धुसत्कृत्येति भगवदुक्तेः। परीक्षितमुवाच परीक्षिता सह सम्भाषणे न तस्य कश्चित्संदेह इति सूचयन्नाह हेति ॥ १ ॥

उद्धवोक्तिमेव दर्शयति तदेषामित्यन्तेन ग्रन्थेन। हे राजन्-प्रेमश्रिया विराजमानः। यस्त्वं कृष्णैकभक्त्या-कृष्णे एकया-अव्यभिचारिण्या भक्त्या-अनुरागलक्षणया नित्यदा पूर्णोऽसि। अतस्त्वं धन्यः-पुण्यवानसि। 'सुकृती पुण्यवान् धन्य' इत्यमरः। ननु कथं त्वया मयि कृष्णैकभक्तिपूर्णत्वं ज्ञायते तत्राह। यस्त्वमित्यादि तदुक्तमभिज्ञैः 'कुलं पवित्रं जननी कृतार्था वसुन्धरा पुण्यवती च तेन। अपारसंकीर्तनसागरेऽस्मिन् लीनं परे ब्रह्मणि यस्य चेतः' इति। अस्यार्थः। कथंभूते संकीर्तनसागरे परे-सर्वोत्कृष्टे पुनः कथंभूते-ब्रह्मणि-व्यापके। अन्यत्सुबोधम् ॥ २ ॥ किञ्च। कृष्णपत्नीष्विति। कृष्णपत्नीषु वज्रनाभे च प्रीतिः-'माहात्म्यज्ञानपूर्वो यः सुदृढः सर्वतोऽधिकः। स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथेति नारदपञ्चरात्रात्। 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्राच्च। माहात्म्यज्ञानपूर्वकः कृष्णविषयकः सुदृढस्नेहः-कृष्णानुरागलक्षणा भक्तिरिति यावत्। त्वया प्रवर्तिता इति दिष्ट्या-भद्रं जातमित्यर्थः। तातेति स्नेहेन संबोधनम्। कृष्णेन दत्तोऽङ्गवैभवो यस्मै तत्संबुद्धौ। हे कृष्णदत्ताङ्गवैभव। अत इदं कृष्णभक्तिप्रवर्तनं तवोचितमेव ॥ ३ ॥ एवं परीक्षिते धन्यवादं दत्त्वा वज्रादीनामपि धन्यत्वं निरूपयति द्वारकेति। द्वारकास्थेषु

श्रीकृष्णस्य मनश्चन्द्रो राधास्यप्रभयान्वितः । तद्विहारवनं गोभिर्मण्डयन् रोचते सदा ॥ ५ ॥
कृष्णचन्द्रः सदापूर्णस्तस्य षोडश याः कलाः । चित्सहस्रप्रभाभिन्ना अत्रास्ते तत्स्वरूपता ॥ ६ ॥
एवं वज्रस्तु राजेन्द्र प्रपन्नभयभञ्जकः । श्रीकृष्णदक्षिणे पादे स्थानमेतस्य वर्तते ॥ ७ ॥

जनेषु मध्ये एते-वज्रादय एव धन्याः-भाग्यसंपन्नाः सन्तीति, 'यत्र क्रियापदं नास्ति तत्र सत्तार्थधातोरध्याहारः कर्तव्यः' इति वैयाकरणाः । न संशयस्तेषां भाग्यसंपन्नत्वे संदेहो नास्तीत्यर्थः । तेषां भाग्यसंपन्नत्वे हेतुमप्याह येषामित्यादि । येषां-वज्रादीनाम् । व्रजनिवासाय व्रजनिवासार्थं, तादर्थ्ये चतुर्थी । यद्वा अप्रयुज्यमानतुमुनन्तस्य कर्मणि चतुर्थी, व्रजनिवासाय-व्रजनिवासं कारयितुम् । प्रभुः-श्रीकृष्णः । पार्थमर्जुनम् । आदिष्टवानाज्ञप्तवान् ॥ ४ ॥

ननु तत्र तेषां वासायाज्ञापने किं कारणं तत्राह श्रीकृष्णस्येति । यद्वा ननु तत्र वासे कोऽतिशयो येन धन्यत्वमुच्यते तत्राह श्रीकृष्णस्येति । यद्वा यतः स्वयमाज्ञापयितापि तत्रैव निवसतीत्याशयेनाह श्रीकृष्णस्येति । श्रीकृष्णस्य मनश्चन्द्रो राधास्यप्रभयान्वितः-तन्मुखप्रभान्वितत्वेन प्राप्ताधिककान्त्या । तद्विहारवनम्-श्रीराधाविहारवनम् श्रीवृन्दावनमिति यावत् । गोभिः-शुद्धसात्त्विकतत्तद्वृत्तिरूपकिरणैर्मण्डयन्नलङ्कुर्वन् व्रजे एव सदा रोचते । मन एव चन्द्र इत्यनेन यथा चन्द्रे प्रभायाः स्वाभाविकी स्थितिस्तथा कृष्णमनसि राधामुखस्येति ज्ञेयम् । तथा च व्रजे श्रीराधाकृष्णयोर्नित्यविहारस्थलत्वात्तन्निवासाज्ञापनेन वज्रादीनां धन्यत्वं युक्तमेवेति भावः । मूर्त्या नाम्ना च कृष्णस्य-श्रीकृष्णस्य-मनश्चन्द्रोऽपि कृष्ण एव । अतो राधास्यप्रभया तन्मुखकान्त्यान्वितो युक्तो भूत्वा रोचते इत्यन्वयो वा । तदुक्तं कृष्णसख्या ललितया "मूर्त्या नाम्ना च कृष्णस्तदपि च यमुनाकूलनीरे विहारः किञ्च श्यामाभिराभिः कुवलयदलदृग्वल्लवीभिः प्रसङ्गः । कुञ्जे ध्वान्तैकपुञ्जे पुनरधिवसतिः केकिपिच्छावचूडस्तस्मादस्माकमन्तस्तिमिरततिहर्ति वक्ति वेदोऽपि चित्रम् ॥" अत्रोत्तरं श्रीराधासख्या विशाखायाः-"गौरा भृङ्गकुरङ्गकोकिलगणा गौराः शुकाः सारिका गौराः सर्वमहीरुहा वनचया गौराणि पुष्पाणि च । गौराश्चक्रकपोतबर्हिविहगा गौरं च वृन्दावनं राधादेहरुचाद्भुतः सखि स च श्यामोऽपि गौरायते ॥" इति ॥ ५ ॥ न केवलमेषां वन्यत्वमात्रमपि तु कृष्णस्वरूपत्वमपीत्याशयेनाह कृष्णचन्द्र इति द्वयेन । कृष्णचन्द्रः सदापूर्णः । तस्य याः-वैष्णवशास्त्रोक्ताः कलाः । तथाहि "श्रीर्भूः कीर्तिरिला लीला कान्तिर्विद्येति सप्तकम् । विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च ॥ प्रह्वी सत्या तथेशाना नवमानुग्रहा मता ॥" यद्वा स्कन्दपुराणस्थप्रभासखण्डोक्ताः कलाः । तथाहि "ततो गोप्यो महादेवि विद्या याः षोडश स्मृताः । तासां नामानि ते वक्ष्ये तानि ह्येकमनाः शृणु ॥" "लम्बिनी १ चन्द्रिका २ कान्ता ३ क्रूरा ४ शीता ५ महोदया ६ भीषणी ७ नन्दनी ८ शोका ९ सुपूर्वविमला १० ऽक्षरा ११। शुभदा १२ शोभना १३ पुण्या १४ हंसी १५ सीता १६ कलाः क्रमात् ॥ हंस एव मतः कृष्णः परमात्मा जनार्दनः । तस्य ताः शक्तयो देवि षोडशैव प्रकीर्तिताः ॥ चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः । सम्पूर्णमण्डला तासां मालिनी षोडशी कला ॥ प्रतिपद्दिनमारभ्य संचरत्याशु चन्द्रमाः । षोडशैव कला यास्तु गोपीरूपा वरानने ॥ एकैकशस्ताः संभिन्नाः सहस्रेण पृथक् पृथक् । एवं ते कथितं देवि रहस्यं ज्ञानसम्भवम् ॥ य एवं वेद पुरुषः स ज्ञेयो वैष्णवो बुधैः ॥' इति । गोपस्य स्त्रियो गोप्यः राज्य इत्यर्थः । 'गोपो भूपेऽपीति नानार्थवर्गः । पुंयोगादाख्यायामिति ङीप् । सर्वं गोपायन्तीति गोप्यः शक्तयो वा इति अष्टादशाक्षरव्याख्याविशेषात् । लम्बिनी अवतारशक्तिरित्यर्थः । ताः सर्वाश्चित्सहस्रप्रभाभिन्नाः चिद्रूपा याः सहस्रं प्रभास्ताभिर्भिन्नाः भेदं प्राप्ताः षोडशसहस्रभेदं प्राप्ता इति यावत्, अतोऽत्र-आसु राज्ञीषु तत्स्वरूपता श्रीकृष्णस्वरूपता आस्ते । 'चित्सहस्रकलाभिन्ना आसां कृष्णस्वरूपता' इति च पाठे त्वेवं व्याख्या-कृष्ण एव चन्द्रः सदा पूर्णः स्वयं भगवत्त्वेन षोडशकलापूर्ण इत्यर्थः । 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमि'ति श्रीभागवतप्रथमस्कन्धोक्तेः । सदा पूर्णत्वं नाम सर्वदा नानाविर्भूतसर्वशक्तित्वमिति । तस्य सदा पूर्णस्य कृष्णचन्द्रस्य । याः स्वरूपभूताः षोडशकलाः "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥" इत्युक्तैश्वर्यादीनां षोडशभागा इत्यर्थः, ताश्चित्सहस्रकलाभिन्नाः कृष्णचिदात्मनो राधाख्यस्यासंख्यातकलाः रुक्मिण्याद्याः स्वरूपशक्तयस्ताभिर्युताः सन्त्यत आसां रोहिण्यादिकृष्णपत्नीनामपि कृष्णस्वरूपतास्तीत्यर्थः । अत्र रुक्मिण्यादिकृष्णपत्नीनां मध्ये कासांचित् राधांशत्वम्, कासांचित् तत्कलात्वम्, कासांचित् तद्विभूतित्वं चेति बोध्यम् । अंशकलाविभूतित्वं नाम तत्तज्जीवप्रवेशेन तत्तत्कार्यानुरूपाविर्भूतज्ञानक्रियाशक्तित्वम् । तत्रापि प्रविष्टायाः महाभक्त्याविर्भावेंऽशत्वव्यवहारः । अल्पशक्त्याविर्भावे तु कलात्वव्यवहारः । ततोऽप्यल्पशक्त्याविर्भावे तु विभूतित्वव्यवहारः । अन्यथा विभागरूपांऽशादित्वे तु श्रीकृष्णचन्द्रात्मरूपराधायाः पूर्णत्वाच्युतत्वाविकारित्वानिरंशत्वादिप्रतिपादकशास्त्रविरोधापत्तेरित्यलम् । विशेषजिज्ञासा चेत् कृष्णसंदर्भादयो ग्रन्था द्रष्टव्याः ॥ ६ ॥

एवं कृष्णपत्नीनां कृष्णस्वरूपतां प्रदर्श्य वज्रस्यापि कृष्णस्वरूपत्वं दर्शयति एवमिति । यथा कृष्णपत्न्यः कृष्णरूपाः एवं तथा प्रपन्नभयभञ्जकः शरणागतपालकत्वात् वज्रोऽपि कृष्णरूप एवेत्यर्थः । हेत्वन्तरमाह । यतः एतस्य वज्रस्य । स्थानम्

अवतारेऽत्र कृष्णेन योगमायाऽतिभाविता । तद्बलेनात्मविस्मृत्या सीदन्त्येते न संशयः ॥ ८ ॥
ऋते कृष्णप्रकाशं तु स्वात्मबोधो न कस्यचित् । तत्प्रकाशस्तु जीवानां मायया पिहितः सदा ॥ ९ ॥
अष्टाविंशे द्वापरान्ते स्वयमेव यदा हरिः । उत्सारयेन्निजां मायां तत्प्रकाशो भवेत् तदा ॥ १० ॥
स तु कालो व्यतिक्रान्तस्तेनेदमपरं शृणु । अन्यदा तत्प्रकाशस्तु श्रीमद्भागवताद्भवेत् ॥ ११ ॥
श्रीमद्भागवतं शास्त्रं यत्र भागवतैर्यदा । कीर्त्यते श्रूयते चापि श्रीकृष्णस्तत्र निश्चितम् ॥ १२ ॥
श्रीमद्भागवतं यत्र श्लोकं श्लोकार्द्धमेव च । तत्रापि भगवान् कृष्णो वल्लवीभिर्विराजते ॥ १३ ॥

स्थितिः । श्रीकृष्णस्य दक्षिणचरणारविन्दे वर्तते । अनेन वज्रनाभस्य श्रीकृष्णदक्षिणचरणारविन्दस्थवज्रचिह्नावतारत्वं सूचितम् ॥ ७ ॥ नन्वेषां कृष्णरूपत्वं तर्हि कस्मादेते सीदन्तीत्याशङ्क्याह अवतारे इति । श्रीकृष्णेन अत्रावतारे कृष्णावतारे या स्वयोगमाया सा जीवेषु अतिभाविता अत्यन्तं विस्तारिता । तद्बलेन योगमायाबलेन याऽऽत्मविस्मृतिः स्वस्वरूपाज्ञानं तया एते वज्रादयः सीदन्ति-श्रीकृष्णविरहदुःखं प्राप्नुवन्तीत्यर्थः ॥ ८ ॥ तर्हि कथमेषामात्मस्मृतिः स्यात् तत्राह ऋते इति । कृष्णप्रकाशादृते विना तु कस्यचिदपि जीवस्य स्वात्मबोधो न भवति । जीवानां तत्प्रकाशस्तु श्रीकृष्णप्रकाशस्तु मायया तद्बहिरङ्ग-शक्त्या सदैव पिहितः आच्छादित इत्यर्थः । श्रीकृष्णप्रकाशेनैव जीवानामात्मस्मृतिर्नान्यथेति भावः ॥ ९ ॥ ननु कदा तस्य प्रत्यक्षप्रकाशो भवेत् । तत्राह । अष्टाविंशे इति । द्वापरान्ते तत्संध्यांशे । हरिः स्वभक्तदुःखहरणशीलः श्रीकृष्णो यदा निजाम् स्वकीयाम् मायाम् बहिरङ्गशक्तिम् । उत्सारयेत् दूरीकुर्यात् । तदैव तत्प्रकाशः कृष्णप्रकाशः प्रत्यक्षतद्दर्शनमिति यावत् । भवेत् जीवानामिति शेषः ॥ १० ॥

स इति । स तु कालः-श्रीकृष्णप्रत्यक्षदर्शनसमयस्तु व्यतिक्रान्तो व्यतीतो गत इति यावत् । तेन हेतुना । 'इदमस्ति सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥'' इति भाष्यकारवचनादिदं सन्निकृष्टं वक्ष्यमाणमिति यावत् । अपरम् श्रीकृष्णप्रकाशकम् श्रीमद्भागवतं तन्माहात्म्यं चेत्यर्थः । मे मत्तस्त्वं शृणु । तदेवाह अन्यदेति । श्रीकृष्णप्रत्यक्ष-दर्शनसमयादन्यस्मिन् समये तत्प्रकाशः श्रीकृष्णप्रकाशस्तु । श्रीमद्भागवतात् स्वकीयं यद्भवेत्तेजः श्रीमद्भागवते न्यधादिति पाद्मीयश्रीमद्भागवतमाहात्म्यवचनात् तत्स्वरूपभूतश्रीमद्भागवतपुस्तकदर्शनादेवेत्यर्थः । यद्वा श्रीमद्भागवतात् तत्पठनपाठन-श्रवणमननादित्यर्थः । भवेत् जीवानामिति शेषः । श्रीमद्भागवतस्य श्रीकृष्णगुणप्रधानत्वात् तद्गुणानां च तत्प्रकाशकत्वादिति भावः ॥ ११ ॥ सिंहासने पुस्तकसंस्थापनपूर्वकं यच्छ्रीभागवतस्य श्रवणकीर्तनादिकं तद्वक्तृश्रोत्रोरलौकिकमाहात्म्यजनकं भवतीत्याह श्रीमद्भागवतमिति । श्रीमद्भागवतम् 'भाति यः सर्वभूतेषु गतिर्यस्य ह्यलौकिकी । वरिष्ठः सर्वशास्त्रेषु तरणिर्यद्भवाम्बुधौ ॥' इत्युक्तलक्षणं शास्त्रम् ग्रन्थः । यत्र स्थाने । यदा यस्मिन् काले भागवतैर्भगवद्भक्तैः श्रोतरि सति कीर्त्यते जिह्वया । वक्तरि सति श्रूयते कर्णाभ्याम् । तत्रैव स्थाने । तस्मिन्नेव काले । श्रीकृष्णः श्रीभिः राधिकादिस्वप्रियाभिर्युक्तः कृष्णः परब्रह्मापि विराजते इत्युत्तरादाकृष्यान्वयः । निश्चितम् । नात्र संदेहः कार्य्य इत्यर्थः । यत्र यदेत्यव्ययाभ्यां सुतीर्थसुकालाभावेऽपि श्रीमद्भागवतस्य श्रवणकीर्तनं श्रीकृष्णप्राप्तिकरमिति ध्वनितम् ॥ १२ ॥ किं बहुना श्रीमद्भागवतस्य तत्पद्यादेर्वा स्वगृहादौ स्थापनमेव श्रीकृष्णप्राप्तिकर-मित्याह श्रीमद्भागवतमिति । श्रीमद्भागवतम् तन्नामकलिखितसमग्रग्रन्थ इत्यर्थः । तदभावे लिखितदशमस्कन्धो वा । तदभावे लिखितपञ्चाध्यायी वा । तदभावे लिखितगोपिकागीतं वा । तदभावे लिखितान्तिमतत्पद्यं वा । तदभावे लिखितानुष्टुप्श्लोको वा । श्लोकशब्दस्य नपुंसकत्वमार्षम् । तदभावे लिखिततदर्द्धमेव वा । तदभावेऽपि चकाराल्लिखिताष्टाक्षरात्मकमनुष्टुप्श्लोक-चतुर्थचरणमेव वा । यत्र गृहादौ विराजते विशेषेण तुलसीचन्दनादिना पूजितत्वेन राजते । तत्रापि तस्मिन् गृहादावपि कृष्णो बल्लवीभिः स्वपरमप्रियाभिर्गोपीभिः सह विराजते विशेषेण वत्सलतया भक्ताधीनत्वेन राजते निवसतीत्यर्थः । कथंभूतः श्रीकृष्णः । भगवान् भगवत्त्वेन प्रकटितषडैश्वर्य्य इत्यर्थः । तत्रैव हि षडैश्वर्य्याणि विराजन्ते इति भावः । अत्रेदं तत्त्वम्-लोके यथा हि केनचिदधमर्णेन सहस्रमुद्राधमर्णार्थनिमित्तमर्थित उत्तमर्णोऽर्थे तस्यापव्ययमानत्वभिया तत्प्रतीतिमकुर्वन् तस्य च स्वाधीनता-मिच्छन् । सकुसीदस्वोत्तमर्णार्थसिद्ध्यर्थं ससज्जनसाक्षिसाक्ष्यं तद्धस्तलिखितकरणपत्रं तावदादाय तस्य स्वकीयमुत्तमर्णार्थं प्रयच्छति । तदा तत् करणपत्रं च स्वगृहे काष्ठपेटिकायां यत्नेन स्थापयति । तत आरभ्याधमर्णस्तच्चिन्तयोत्तमर्णस्य सदैवाधीनो भवेत् । अथास्य प्रातिकूल्ये तु सज्जनसाक्षिणो विराजतेऽस्य गृहे त्वद्धस्तलिखितकरणपत्रमस्ति च तस्मिन् सज्जनसाक्षिणामस्माकं साक्ष्यमित्यादिवचनैस्तं ग्राहकं निगृह्यापि तदधीनं कुर्वन्त्येव । तथा भो भावुक प्रयोक्तः देहि मम त्वं स्वं मनोरूपमधमर्णार्थमिति श्रीकृष्णेनार्थितो भक्तरूपोत्तमर्णस्तस्यापह्नुवानत्वभिया तत्प्रतीतिमकुर्वन् तस्य च स्वाधीनतामिच्छन् । सप्रेमरसकुसीदस्वमनो-रूपोत्तमर्णार्थसिद्ध्यर्थं ध्रुवप्रह्लादोद्धवपरमभक्तसाक्षिसाक्ष्यं श्रीकृष्णाभिधेयीयं लिखितश्रीभागवतं तत्पद्यादिरूपं वा करणपत्रं स्वगृहे स्थापयेत् । तदा तच्चिन्तया स्वप्रियाभिर्गोपीभिः सह श्रीकृष्णो भगवान् तद्गृहमागत्य तदधीनो भवेदेव । नो चेत् तदा

भारते मानवं जन्म प्राप्य भागवतं न यैः । श्रुतं पापपराधीनैरात्मघातस्तु तैः कृतः ॥ १४ ॥
श्रीमद्भागवतं शास्त्रं नित्यं यैः परिसेवितम् । पितुर्मातुश्च भार्यायाः कुलपंक्तिः सुतारिता ॥ १५ ॥
विद्याप्रकाशो विप्राणां राज्ञां शत्रुजयो विशाम् । धनं स्वास्थ्यं च शूद्राणां श्रीमद्भागवताद्भवेत् ॥ १६ ॥
योषितामपरेषां च सर्ववाञ्छितपूरणम् । अतो भागवतं नित्यं को न सेवेत भाग्यवान् ॥ १७ ॥
अनेकजन्मसंसिद्धः श्रीमद्भागवतं लभेत । प्रकाशो भगवद्भक्तेरुद्भवस्तत्र जायते ॥ १८ ॥
सांख्यायनप्रसादाप्तं श्रीमद्भागवतं पुरा । बृहस्पतिर्दत्तवान्मे तेनाहं कृष्णवल्लभः ॥ १९ ॥
आख्यायिकां च तेनोक्तां विष्णुरात निबोध ताम् । ज्ञायते संप्रदायोऽपि यत्र भागवतश्रुतेः ॥ २० ॥

सज्जनसाक्षिणो ध्रुवप्रह्लादादयो विराजतेऽस्य गृहे त्वन्नामकं लिखितश्रीभागवतं तत्पद्यादिरूपं वा करणपत्रमस्ति च तस्मिन् साक्षिणामस्माकं साक्ष्यमित्यादिवचनैस्त्वं निगृह्य तद्गृहे चानाय्य तद्वशे स्थापयन्त्येव । ततश्च तद्भक्तवश्यः श्रीकृष्णो भगवानपि तद्भक्तमनोरूपोत्तमणार्थविनिमयाय स्वस्य सदैव तदधीनतापूर्वकं तस्मै स्वषडैश्वर्य्याणि दातुं सपरिवारस्तद्गृहे एव विराजते इति दिक् ॥ १३ ॥ विपक्षे[1] दोषमाह । भारते इति । भारते भरतखण्डे । यैर्जनैः न श्रुतमित्युपलक्षणं कीर्तनादेः । तैर्जनैः । आत्मघातः कृतः । भगवद्विमुखत्वेन ते आत्महन असुरा इत्यर्थः । तदुक्तमुद्धवं प्रति श्रीभगवता 'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत्स आत्महा इति । यथा च श्रुतिः 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥' अयमर्थः–असुरेभ्यो हिता असुर्याः असुराश्च विष्णुभक्तिरहिताः तद्व्यतिरिक्ताः देवाः । तथा चोक्तमाग्नेये 'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । विष्णुभक्तिपरो दैव आसुरस्तद्विपर्ययः ॥' इति । तेषां ये लोकाः कथंभूताः अन्धेन तमसावृतास्तांस्ते प्रेत्य मृत्वाऽभिगच्छन्ति । के गच्छन्तीत्यत आह । ये आत्महनः आत्मघातकाः भगवद्विमुखा इति श्रुतेरर्थः ॥ १४ ॥ अथ श्रोतृणां श्रीमद्भागवतनित्यश्रवणादिफलमाह श्रीमद्भागवतमिति । यैर्जनैर्नित्यम् अविच्छेदेन । परिसेवितम् श्रवणादिभिः श्रद्धापूर्वकं सेवितमित्यर्थः तैर्जनैः । सुतारिता सुष्ठु श्रमराहित्येन मत्स्यग्राहादिभयराहित्येन वा । सुतारिता इत्यनेन संसारस्य समुद्रत्वं सूचितम् । तेन च श्रीभागवतस्य ज्ञानतरीत्वं च ध्वनितम् ॥ १५ ॥ चतुर्वर्णानां पृथक् पृथक् तच्छ्रवणादिफलमाह विद्येति । विप्राणाम् ब्राह्मणानाम् । विद्याप्रकाशः श्रीकृष्णविषयकज्ञानप्रकाशः । राज्ञाम् क्षत्रियाणाम् । विशाम् वैश्यानाम् । शूद्राणामत्रैवर्णिकानाम् । चित्ते स्वास्थ्यं सुखमित्यर्थः ॥ १६ ॥

श्रीमद्भागवतश्रवणं स्त्र्यादीनामपि सर्वमनोऽभिलाषपूरकमित्याह । योषितामिति योषिताम्–स्त्रीणाम् । अपरेषाम्–अनुलोमजादीनाम् । श्रीमद्भागवतश्रवणात्सर्वमनोरथपूरणं भवेदिति पूर्वेणैवान्वयः । शूद्रादीनामेषां श्रीमद्भागवतश्रवणेऽधिकारः, न तु पाठे । श्रीमद्भागवतस्य पञ्चमवेदत्वात् तत्र तेषामनधिकारात् । अत एव 'जनश्च शूद्रोपि महत्त्वमीयादि'ति श्रीमद्वाल्मीकीयरामायणे । 'शूद्रः सत्तमतामियादि'ति विष्णुसहस्रनामपाठे च शूद्रादीनां श्रवणेन फलं न पाठेऽधिकार इत्यङ्गीकृतं सत्संप्रदायप्रवर्तकपूर्वाचार्य्यैः । अतः–श्रीभागवतस्य विद्याप्रकाशादिजनकत्वात् । कः श्रीभागवतं नित्यं न सेवेत किं तु सेवेत एवेत्यर्थः । यतो भाग्यवान्–पुण्यवान् । 'यतो भागवतात्तत्तु' इति च पाठे तत् -श्रीभागवतम् ॥ १७ ॥ ननु तर्हि किमिति न सर्वे तच्छृण्वन्तीत्याशङ्क्याह । अनेकजन्मसंसिद्ध इति । बहुजन्मसु सम्यक्-तपआदिना सिद्धः-पक्वो जन इति विशेष्याध्याहारः । श्रीमद्भागवतम्-तत्पुस्तकम् तच्छ्रवणादिकं वा । लभेदिति परस्मैपदम् , चक्षिङो ङित्करणाज्ज्ञापकात् । 'अनुक्रमप्यूहति पण्डितो जनः' इति भर्तृहरिप्रयोगादात्मनेपदस्यानित्यत्वेन साधु । तत्र श्रीभागवतपुस्तकलाभे तच्छ्रवणादिलाभे वा । प्रथमं प्रकाशः–श्रीकृष्णविषयकज्ञानप्रकाशस्तदनन्तरं भगवद्भक्तेरुद्भवश्च जायते । अद्भुत इति पाठे ज्ञानादिप्रकाशाद्विलक्षण इत्यर्थः । 'अनेकजन्मसंसिद्धिः श्रीमद्भागवताद्भवेदि'ति च पाठान्तरम् । तत्र किञ्चेत्यवतरणम् । योऽनेकजन्मसंसिद्धिः-बहुजन्मभिस्तत्त्वसंप्राप्तिः सा श्रीमद्भागवतात् तच्छ्रवणादिना एकस्मिन्नेव जन्मनि भवेत् जनस्येति शेषः । तत्र-तस्यां सत्याम् । अन्यत्पूर्ववत् । अतो नित्यमेतदेव श्रोतव्यमिति भावः ॥ १८ ॥ एतदेव स्वानुभवेन द्रढयति । यद्वा अहं तु श्रीमद्भागवतादेव संसिद्धोऽस्मीत्याह सांख्यायनप्रसादाप्तमिति । सांख्यायनस्य-तन्नामकपरमगुरोः । प्रसादेन-अनुग्रहेण । आप्तम्-गुरुपरंपरया प्राप्तमित्यर्थः । श्रीमद्भागवतं पुरा-श्रीकृष्णानुग्रहात्पूर्वं मद्गुरुर्बृहस्पतिः । मे-मह्यम् । दत्तवान्-श्रीमद्भागवतोपदेशं कृतवानित्यर्थः । तेन-गुरूपदिष्टश्रीमद्भागवतेन हेतुना । कृष्णवल्लभः-श्रीकृष्णो वल्लभः प्रियो यस्य । श्रीकृष्णस्य प्रियोऽस्मीति वा । 'यत्र क्रियापदं नास्ति तत्र सत्तार्थकक्रियाऽध्याहारः कर्त्तव्य' इति वैयाकरणाः ॥ १९ ॥ तदेवं श्रीभागवतस्य माहात्म्यमुक्तमिदानीं तस्यैवाऽऽख्यायिकां वक्तुं तावद्राजानमभिमुखीकरोति आख्यायिकामिति । विष्णुरात-हे परीक्षित् । तेन-बृहस्पतिनैवोक्ताम्-कथिताम् । ताम्-अविविलक्षणाम् । श्रीमद्भागवताख्यायिकाम्-तस्य पूर्ववृत्तविषयां कथा-

१. विपक्षे-श्रीभागवतश्रवणकीर्तनस्थापनाद्यभावे ।

श्रीबृहस्पतिरुवाच—ईक्षां चक्रे यदा कृष्णो मायां पुरुषरूपधृक् । ब्रह्मा विष्णुः शिवश्चापि रजःसत्त्वतमोगुणैः ॥ २१ ॥
पुरुषास्त्रय उत्तस्थुरधिकारांस्तदादिशत् । उत्पत्तौ पालने चैव संहारे प्रक्रमेण तान् ॥ २२ ॥
ब्रह्मा तु नाभिकमलादुत्पन्नस्तं व्यजिज्ञपत् ।
श्रीब्रह्मोवाच—नारायणादिपुरुष परमात्मन् नमोऽस्तु ते ॥ २३ ॥
त्वया सर्गे नियुक्तोऽस्मि पापीयान् मां रजोगुणः । त्वत्स्मृतौ नैव बाधेत तथैव कृपय प्रभो ॥ २४ ॥
श्रीबृहस्पतिरुवाच–यदा तु भगवांस्तस्मै श्रीमद्भागवतं पुरा । उपदिश्याब्रवीद् ब्रह्मन् सेवस्वैनत्स्वसिद्धये ॥ २५ ॥
ब्रह्मा तु परमप्रीतस्तेन कृष्णाप्तयेऽनिशम् । सप्तावरणभंगाय सप्ताहं समवर्तयत् ॥ २६ ॥
श्रीभागवतसप्ताहसेवनाप्तमनोरथः । सृष्टिं वितनुते नित्यं ससप्ताहः पुनः पुनः ॥ २७ ॥
विष्णुरप्यर्थयामास पुमांसं स्वार्थसिद्धये । प्रजानां पालने पुंसा यदनेनापि कल्पितः ॥ २८ ॥
श्रीविष्णुरुवाच—प्रजानां पालनं देव करिष्यामि यथोचितम् । प्रवृत्त्या च निवृत्त्या च कर्मज्ञानप्रयोजनात् ॥ २९ ॥
यदा यदैव कालेन धर्मग्लानिर्भविष्यति । धर्मं संस्थापयिष्यामि ह्यवतारैस्तदा तदा ॥ ३० ॥
भोगार्थिभ्यस्तु यज्ञादिफलं दास्यामि निश्चितम् । मोक्षार्थिभ्यो विरक्तेभ्यो मुक्तिं पञ्चविधां तथा ॥ ३१ ॥

मित्यर्थः । मत्तस्त्वं निबोध जानीहि । यत्र यस्यामाख्यायिकायाम् । श्रीभागवतश्रुतेः तच्छ्रवणस्य । संप्रदायः सम्यक् पुराणोक्तरीत्या प्रदीयते उपदिश्यते इति पूर्वपूर्वैः स्वशिष्येभ्यः कृतस्योपदेशस्य विषयीभूतोऽर्थः इत्यर्थः । 'स्यात्पारंपर्यमाम्नायः संप्रदायो गुरुक्रमः' इति हैमः । यद्वा श्रीभागवतमेव श्रुतिर्वेदः 'श्रुतिः स्त्री वेद आम्नाय' इत्यमरः । तस्य संप्रदायः संप्रदीयते गुरुणा शिष्यायेति गुरुपारंपर्यागतत्वम् गुरुपरम्पराप्रविष्टतत्तत्पुरुषकर्तृकोपदेशविषयत्वमिति यावत् । त्वया जनैर्वा ज्ञायते इत्यन्वयः ॥ २० ॥ तामेव श्रीभागवताख्यायिकां कथयन् श्रीबृहस्पतिरुवाचेत्युद्धवोक्तिः ईक्षामित्यादिना । श्रीकृष्णः कृष्णस्तु भगवान् स्वयम् । परात्परं ब्रह्म च ते विभूतय इत्याद्युक्तेश्च । षोडशकलापूर्णतमः साकारसच्चिदानन्दपरब्रह्मपुरुषोत्तमः । आद्योऽवतारः पुरुषः परस्य । 'जगृहे पौरुषं रूपमि'त्याद्युक्तेश्च । पुरुषावतारधारी कारणार्णवशायिरूपः सन् । यदा मायाम् बहिरङ्गां स्वशक्तिम् । ईक्षांचक्रे ददर्श । यद्वा तां प्रति ईक्षाम् स्वदृष्टिं चक्रे यदा च तदीक्षामात्रेणैव रजःसत्त्वतमोगुणैः ब्रह्मा विष्णुः शिवश्चेति ॥ २१ ॥ त्रयः पुरुषाः गुणावतारा उत्तस्थुस्तदा तेभ्यो ब्रह्मादिभ्य उत्पत्त्यादिषु प्रकर्षक्रमेणाधिकारानादिशदिति द्वयोरन्वयः ॥ २२ ॥ ब्रह्मेत्यर्द्धकम् । तम् पुरुषावतारं भगवन्तम् । व्यजिज्ञपत् नमस्कारपूर्वकं स्वप्रार्थनां कृतवानित्यर्थः । तां कुर्वन् ब्रह्मोवाचेति बृहस्पतेरुक्तिः । नारायणेति सार्द्धेन ॥ २३ ॥ त्वत्स्मृतौ तव स्मरणे । तथैव त्वत्स्मृतौ रजोगुणकृतबाधाऽभावप्रकारेणैव । त्वं कृपय-कृपया तथोपदेशं कुर्वित्यर्थः ॥ २४ ॥ श्रीबृहस्पतिरुवाच यदेति । यदा ब्रह्मविज्ञापनसमये तदेति पाठान्तरम् । तस्मै ब्रह्मणे । पुरा सृष्टेरादौ । किमब्रवीदित्यपेक्षायामाह ब्रह्मन्नित्यादि । स्वसिद्धये रजःकृतबन्धननिरासपूर्वकस्वसृष्टिवृद्ध्यर्थम् । एनत् श्रीमद्भागवतम् । सप्ताहक्रमेण त्वं सेवस्व ॥ २५ ॥ ब्रह्मेति । तदा ब्रह्मा तु परमप्रीतः सन् । तेन श्रीभागवतपाठेन अनिशम् अहर्निशम् । कृष्णप्राप्तये । सप्तावरणभङ्गाय तत्र शुभाशुभकर्मरूपं ग्रन्थिद्वयं पञ्चपर्वात्मिकाविद्याग्रन्थिपञ्चकं च एवं सप्तग्रन्थय एव सप्तावरणं तस्य भङ्गाय । अप्रयुज्यमानतुमुन्नन्तस्य कर्मणि चतुर्थी । सप्तावरणभङ्गं कर्तुमित्यर्थः । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' इत्याद्युक्तेः । यद्वा सप्तावरणभंगाय पृथ्व्यप्तेजोवाय्वाकाशाहंकारमहत्तत्त्वानीति सप्तावरणानि तेषां भंगाय । चतुर्थी तु पूर्ववत् । सप्ताहम् सप्तदिनम् अनिशम् अव्यवधानेन । समवर्तयत् सम्यक् श्रद्धापूर्वकमवर्तयत् श्रीभागवतस्य सप्ताहपाठमकरोदित्यर्थः । अनेन श्रीभागवतशास्त्रेण भगवद्रूपे ज्ञाते भक्तस्य सप्तावरणभंगपूर्वककृष्णाप्तिर्भवतीति सूचितम् ॥ २६ ॥ श्रीभागवतसप्ताहपाठस्य फलमाह । श्रीभागवतसप्ताहसेवनेनाप्तः प्राप्तो रजोनिरासपूर्वकसृष्टिवृद्धिरूपो मनोरथो येन । अत एव पुनः पुनः सप्ताहेन सह वर्त्तमानः श्रीब्रह्मा सृष्टिं वितनुते । विस्तारयति । अनेन श्रीभागवतस्य पुनः पुनः सप्ताहपाठेन पुरुषस्य सृष्टिविस्तारणे सामर्थ्यमपि भवतीति सूचितम् ॥ २७ ॥ विष्णुरिति । विष्णुरपि स्वार्थसिद्धये । स्वपालनपूर्वकप्रेमिभक्तादिपालनसामर्थ्यसिद्धये पुमांसम्–पुरुषावतारं भगवन्तं प्रार्थयामास । यत् यस्मात् । अनेन पुंसा पुरुषावतारेण भगवता । प्रजानां पालने तन्निमित्ते ॥ २८ ॥ विष्णुरुवाचेति बृहस्पतेरुक्तिः । प्रजानामित्यादिचतुर्भिः देव हे भगवन् । प्रकर्षेण योजनं प्रयोजनं कर्मज्ञानयोः प्रयोजनं तस्मात् क्रमेण या प्रवृत्तिर्या च निवृत्तिस्ताभ्याम् । यथोचितम् यथायोग्यम् ॥ २९ ॥

यदेति । कालेन निमित्तेन । अवतारैः मत्स्याद्यवतारैः । धर्मम् सनातनम् संस्थापयिष्यामि सम्यक् चतुष्पात्त्वेन स्थापयिष्यामि । अन्यत्सुबोधम् ॥ ३० ॥ भोगार्थिभ्य इति । यथा भोगार्थिभ्यः कर्मिभ्यो यज्ञादिफलं स्वर्गादि दास्यामि इति निश्चितम् । तथा मोक्षार्थिभ्यः सालोक्यम्–मया सहैकस्मिन् लोकेवासम् ( १ ) सार्ष्टिम्–समानैश्वर्यम् ( २ ) सामीप्यम्–निकट-

येऽपि मोक्षं न वाञ्छन्ति तान् कथं पालयाम्यहम् । आत्मानं च श्रियं चापि पालयामि कथं वद ॥ ३२ ॥
तस्मा अपि पुमानाद्यः श्रीभागवतमादिशत् । उवाच च पठस्वैनत्तव सर्वार्थसिद्धये ॥ ३३ ॥
ततो विष्णुः प्रसन्नात्मा परमार्थकपालने । समर्थोऽभूत् श्रिया मासि मासि भागवतं स्मरन् ॥ ३४ ॥
यदा विष्णुः स्वयं वक्ता लक्ष्मीश्च श्रवणे रता । तदा भागवतश्रावो मासेनैव पुनः पुनः ॥ ३५ ॥
यदा लक्ष्मीः स्वयं वक्त्री विष्णुश्च श्रवणे रतः । मासद्वयं रसास्वादस्तदातीव सुशोभते ॥ ३६ ॥
अधिकारे स्थितो विष्णुर्लक्ष्मीर्निश्चिन्तमानसा । तेन भागवतास्वादस्तस्या भूरि प्रकाशते ॥ ३७ ॥
अथ रुद्रोऽपि तं देवं संहाराधिकृतः पुरा । पुमांसं प्रार्थयामास स्वसामर्थ्यविवृद्धये ॥ ३८ ॥
श्रीरुद्र उवाच—नित्ये नैमित्तिके चैव संहारे प्राकृते तथा । शक्तयो मम विद्यन्ते देवदेव मम प्रभो ॥ ३९ ॥
आत्यन्तिके तु संहारे मम शक्तिर्न विद्यते । महद्दुःखं ममैतत्तु तेन त्वां प्रार्थयामहे ॥ ४० ॥
श्रीबृहस्पतिरुवाच—श्रीमद्भागवतं तस्मा अपि नारायणो ददौ । स तु संसेवनादस्य जिग्ये चापि तमोगुणम् ॥ ४१ ॥
कथा भागवती तेन सेविता वर्षमात्रतः । लये त्वात्यन्तिके तेनावाप शक्तिं सदाशिवः ॥ ४२ ॥
श्रीउद्धव उवाच—श्रीभागवतमाहात्म्यमिमामाख्यायिकां गुरोः । श्रुत्वा भागवतं लब्ध्वा मुमुदेऽहं प्रणम्य तम् ॥ ४३ ॥
ततस्तु वैष्णवीं रीतिं गृहीत्वा मासमात्रतः । श्रीमद्भागवतास्वादो मया सम्यङ्निषेवितः ॥ ४४ ॥
तावतैव बभूवाहं कृष्णस्य दयितः सखा । कृष्णेनाथ नियुक्तोऽहं व्रजे स्वप्रेयसीगणे ॥ ४५ ॥

वर्तित्वम् ( ३ ) सारूप्यम्–समानरूपत्वम् ( ४ ) एकत्वम्–सायुज्यम् ( ५ ) इति पञ्चविधां मुक्तिं दास्यामि ॥ ३१ ॥ य इति । ये प्रेमरसिकाः मोक्षमपि न वाञ्छन्ति । तान् प्रेमरसिकान् । कथम् केन प्रकारेण पालयामि किं दत्वा तेभ्योऽहमनृणो भवेयमित्यर्थः । कथमात्मानं च पालयामि किं दत्वा तर्पयामीत्यर्थः । श्रियम् लक्ष्मीं च कथं पालयामि कं भोगं दत्वा तां चापि तर्पयामीत्यर्थः । तत्प्रकारं त्वं वद कथय ॥ ३२ ॥ तस्मा इति । तस्मै गुणावताराय विष्णवे । आद्यः पुरुषावतारो भगवान् आदिशत् उपदिदेश एनत् श्रीभागवतम् । तव सर्वार्थसिद्धये स्वपालनपूर्वकभक्तिरसिकादिपालनसिद्धये ॥ ३३ ॥ तत इति ततः पुरुषावतारोपदिष्टश्रीभागवतप्राप्त्यनन्तरम् । परमार्थकपालने परमा सर्वोत्कृष्टा भक्तिरेव अर्थः–पुरुषार्थो येषां ते परमार्थकाः भक्तिरसिकास्तेषां पालने । यद्वा परमः 'आत्मा हि परमो हरिरि'ति वचनात् सर्वोत्कृष्टो भगवानेवार्थः पुरुषार्थो येषां तथाभूतानामपि यत्पालनं तस्मिन् । श्रिया श्रवणकथनतत्परया सह श्रीभागवतस्यैकमासं पारायणं कुर्वन्नेवेत्यर्थः ॥ ३४ ॥

यदेति । श्रीभागवतश्रवः तच्छ्रवणम् । पुनः पुनर्मासपारायणेनैव शोभते इत्युत्तरादाकृष्यान्वयः ॥ ३५ ॥ यदेति । श्रीभागवतरसस्यास्वादो मासद्वयम् मासद्वयपर्यन्तम् । अतीव अतिशयेन सु सुष्ठु शोभते इत्यन्वयः ॥ ३६ ॥ स्वयं लक्ष्म्यास्तु स्ववक्तृत्वे श्रीभागवतरसास्वादोऽतिशयेन प्रकाशते इति सहेतुकं दर्शयति । अधिकारे इति । यतः पालनाधिकारे स्थितः । अत एव लक्ष्मीस्तु स्थिरचित्ता तस्यास्तदानीं कार्यान्तराभावात् तेन हेतुना । तस्याः लक्ष्म्याः श्रीभागवतरसस्यास्वादो भूरि अधिकं प्रकाशते । निश्चितमानसेति पाठान्तरम् ॥ ३७ ॥ अथेति अथ विष्णुसर्वार्थसिद्ध्यनन्तरम् । देवम्—मत्स्यादिनानावतारैः क्रीडन्तम् । तम् अतिप्रसिद्धम् । पुमांसम् पुरुषावतारं भगवन्तमेव । स्वसामर्थ्यविवृद्धये स्वस्याऽऽत्यन्तिकप्रलयसामर्थ्ये या विशेषेण वृद्धिस्तस्यै । 'स्वासामर्थ्यनिवृत्तये' इति पाठान्तरे तु सुगमम् ॥ ३८ ॥ प्रलयत्रये स्वशक्तिसामर्थ्यं कथयन्नात्यन्तिकप्रलयसामर्थ्यं च प्रार्थयन् श्रीरुद्र उवाचेति बृहस्पतेरुक्तिः नित्ये इति । देवानामस्मदादीनामपि देव पूज्य । हे मम प्रभो मामुपदेष्टुं समर्थ ॥ ३९ ॥ आत्यन्तिके मोक्षे । एतत् आत्यन्तिकप्रलयशक्त्यभावरूपम् । तेन—महता दुःखेन हेतुना । प्रार्थये इति वक्तव्ये प्रार्थयामहे इति 'अस्मदो द्वयोश्चे'ति साधु ॥ ४० ॥ इति रुद्रोक्तिं प्रदर्श्य श्रीबृहस्पतिरुवाचेत्युद्धवोक्तिः श्रीमद्भागवतमिति । तस्मै संहाराधिकृताय रुद्राय । ददौ उपदिदेश । स तु रुद्रोऽपि । अस्य श्रीभागवतस्य । सम्यक् आलस्यादिराहित्येन सेवनात् पठनरूपात् ॥ ४१ ॥ कथेति । तेन श्रीरुद्रेण । वर्षमात्रतः वर्षो मात्रा प्रमाणं यस्य पारायणस्य तस्मात् । यद्वा वर्ष एव वर्षमात्रम् तस्मादित्येवार्थकमात्रशब्देन मयूरव्यंसकादित्वात्समासः । तेन श्रीभागवतपारायणेन । अवाप लेभे ॥ ४२ ॥ श्रीभागवताख्यायिकां समाप्य श्रीउद्धव उवाचेति सूतोक्तिः । श्रीभागवतमाहात्म्यमिति । इमाम् पूर्वोक्ताम् । आख्यायिकाम् पूर्ववृत्तविषयां कथां चेत्यर्थः । गुरोः बृहस्पतेः । तस्मादेव लब्ध्वा पठित्वा इत्यर्थः । तम् बृहस्पतिं गुरुम् ॥ ४३ ॥ किञ्च तत इति । ततः तस्मात् बृहस्पतेर्गुरोरेव । मासपर्य्यंतं श्रीभागवतस्य पठनास्वादो मया सम्यक् प्रेमपूर्वकं नितरामव्यवधानेन सेवितः ॥ ४४ ॥ तावतेति । तावतैव श्रीभागवतस्य मासिक-

विरहार्त्तासु गोपीषु स्वयं नित्यविहारिणा । श्रीभागवतसंदेशो मन्मुखेन प्रयोजितः ॥ ४६ ॥
तं यथामति लब्ध्वा ता आसन् विरहवर्ज्जिताः । नाज्ञासिषं रहस्यं तच्चमत्कारस्तु लोकितः ॥ ४७ ॥
स्वर्वासं प्रार्थ्य कृष्णं च ब्रह्माद्येषु गतेषु मे । श्रीमद्भागवते कृष्णस्तद्रहस्यं स्वयं ददौ ॥ ४८ ॥
पुरतोऽश्वत्थमूलस्य चकार मयि तद्दृढम् । तेनात्र व्रजवल्लीषु वसामि बदरीं गतः ॥ ४९ ॥
तस्मान्नारदकुण्डेऽत्र तिष्ठामि स्वेच्छया सदा । कृष्णप्रकाशो भक्तानां श्रीमद्भागवताद्भवेत् ॥ ५० ॥
तदेषामपि कार्य्यार्थं श्रीमद्भागवतं त्वहम् । प्रवक्ष्यामि सहायोऽत्र त्वयैवानुष्ठितो भवेत् ॥ ५१ ॥

श्रीसूत उवाच—विष्णुरातस्तु श्रुत्वा तदुद्धवं प्रणतोऽब्रवीत् ।
श्रीपरीक्षिदुवाच—हरिदास त्वया कार्य्यं श्रीभागवतकीर्तनम् ॥ ५२ ॥
आज्ञाप्योऽहं यथाकार्य्यं सहायोऽत्र मया तथा ।
श्रीसूत उवाच—श्रुत्वैतदुद्धवो वाक्यमुवाच प्रीतिमानसः ॥ ५३ ॥
श्रीउद्धव उवाच–श्रीकृष्णेन परित्यक्ते भूतले बलवान् कलिः । करिष्यति परं विघ्नं सत्कार्य्ये समुपस्थिते ॥ ५४ ॥
तस्माद्दिग्विजयं याहि कलिनिग्रहमाचर । अहं तु मासमात्रेण वैष्णवीं रीतिमास्थितः ॥ ५५ ॥
श्रीमद्भागवतास्वादं प्रचार्य्य त्वत्सहायतः । एतान् सम्प्रापयिष्यामि नित्यधाम्नि मधुद्विषः ॥ ५६ ॥

पारायणसेवनेनैव । अथ सखित्वानन्तरम् । स्वप्रेयसीगणे स्वस्यातिप्रियगोपीगणे । नियुक्तः नितराम् स्वकीयत्वेन योजितः आज्ञप्तः ॥ ४५ ॥ ननु किमर्थं तत्र त्वं नियुक्त इति चेत्तत्राह । विरहार्त्तास्विति । नित्यश्रीवृन्दावनस्वधाम्नि विहारिणा विहर्तुं शीलमस्यास्तीति तेन भगवता श्रीकृष्णेन विरहार्तासु विरहाभासेन दुःखितासु गोपीषु । श्रीभागवतमेव संदेशो मन्मुखेन प्रयोजितः तासां विरहाभासदुःखनिरासार्थं मद्द्वारा श्रीभागवतमेवोपदिष्टवानित्यर्थः ॥ ४६ ॥ तमिति । तम् श्रीभागवतमेव संदेशम् । यथामति स्वमतिमनतिक्रम्य । लब्ध्वा प्राप्य । तदनिवर्चनीयम् । रहस्यम् तत्त्वम् । नाज्ञासिषम् न ज्ञातवानहम् । चमत्कारस्तु तासु विरहाभासजन्यदुःखाभावरूपस्तु मया लोकितो दृष्ट एव ॥ ४७ ॥ किञ्च स्वर्वासमिति । स्वरव्ययं स्वर्गे । त्वं स्वर्गं वैकुण्ठं गच्छ । तत्रैव च वसेति द्वारकायामेव कृष्णं प्रार्थ्य । कृष्णस्येति पाठे तस्य स्वर्वासं तमेव प्रार्थ्य ब्रह्माद्येषु गतेषु सत्सु श्रीभागवते यद्रहस्यम् तत्त्वं तत् श्रीकृष्णः स्वयमेव नान्यद्वारा मे मह्यमेव ददौ उपदिष्टवानित्यर्थः । केषुचित्प्राचीनपुस्तकेषु । 'सर्वाःसमिति'पाठो दृश्यते सोऽस्माऽभिरनर्थकत्वादुपेक्षितः ॥ ४८ ॥ पुरत इति । अश्वत्थमूलस्य पुरतः अग्रे अश्वत्थवृक्षस्य भगवद्विभूतित्वात् तमेव साक्षिणं कृत्वेव । तत् तदेव श्रीभागवतरहस्यं मयि दृढं चकार । न हि श्रीभागवतरहस्यज्ञानादन्यद् ज्ञानं श्रेयस्करमित्युपदिदेशेत्यर्थः । 'नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ।' इत्येकादशोक्तेः । तेन श्रीभागवतरहस्यदृढज्ञानेन हेतुना । देहेन बदरीं गतोप्यहमत्र वृन्दावने एव । व्रजवल्लीषु परब्रह्मकृष्णरूपासु वल्लीषु वल्लीरूपेण वसामि । श्रीकृष्णमेव सेवितुमिति भावः ॥ ४९ ॥ ननु तत्रापि कुत्र तव तद्रूपेण स्थितिरिति चेत्तत्राह तस्मादित्यर्द्धेन । तस्मात् श्रीभागवतस्य रहस्यज्ञानाद्धेतोः । स्वेच्छया कृष्णेच्छया । अत्र नारदकुण्डे एव तिष्ठामि । तत्र व्रजवल्लीनां बहुत्वात्तद्रूपेणैव तत्र मम स्थितिरिति भावः । तस्माज्जानीहि सर्वत्रेति पाठान्तरम् । तदेवं श्रीकृष्णोपदिष्टश्रीभागवतरहस्यज्ञानेन हेतुना श्रीनारदकुण्डे स्वस्थितिं निरूप्य प्रकृतमनुसरति । कृष्णप्रकाश इति सार्द्धेन ॥ ५० ॥ तस्मात् श्रीभागवतस्य श्रीकृष्णप्रकाशजनकत्वात् । एषाम् वज्रादीनामपि कार्य्यार्थं श्रीकृष्णदर्शनपूर्वकविरहदुःखनिवृत्त्यर्थम् श्रीभागवतमेव प्रवक्ष्यामि । अत्र श्रीभागवतवाचने । त्वयैवानुष्ठितः कृतः सहायो भवेत् त्वं सहायो भवेत्यर्थः ॥ ५१ ॥ श्रीसूत उवाचेति व्यासोक्तिः । विष्णुरातेत्यर्द्धकम् । विष्णुरातः श्रीपरीक्षित् । तत् उद्धववाक्यम् । प्रणतः नम्रीभूतः श्रीपरीक्षिदुवाचेति सूतोक्तिः । हरिदासेत्यर्द्धकम् ॥ ५२ ॥ आज्ञाप्य इति । अहं यथाकार्य्यम् कार्य्यमनतिक्रम्य त्वया आज्ञाप्य आज्ञापयितुं योग्यः । तथाऽत्र श्रीभागवतकीर्तने मया सहायोऽपि भवेत् अहं सहायोऽपि भवेयमित्यर्थः । 'साहाय्यं च मया तथा इति पाठे तु यथा साहाय्यं कार्य्यं तथा त्वयाऽहमाज्ञाप्य इत्यन्वयः । श्रीसूत उवाचेति व्यासोक्तिः । श्रुत्वेति । एतत् हरिदासेत्यादिपरीक्षिद्वाक्यम् । प्रीतिः कृष्णानुरागलक्षणा भक्तिर्मानसे यस्य स उवाच विष्णुरातमिति शेषः ॥ ५३ ॥ श्रीउद्धव उवाचेति सूतोक्तिः । श्रीकृष्णेनेति सार्द्धेन । सत्कार्य्ये श्रीभागवतकीर्तनादिलक्षणे । सम्यक् श्रद्धापूर्वकमुपस्थिते सति । परम् केवलम् । परमधिकं वा । यतो बलवान् ॥ ५४ ॥ तर्हि किं कर्तव्यं मया तत्राह । तस्मादित्यर्द्धेन । तस्मात् कलियुगस्य परमविघ्नकारित्वात् । दिग्विजयं याहि कर्तुमिति शेषः । तत्र कलिनिग्रहमाचर कुरु । ननु निग्रहार्थं मयि गते सति त्वमत्र किं करिष्यसि तत्राह अहमिति सार्द्धेन । अहं तु वैष्णवीं रीतिमास्थितः सन् ॥ ५५ ॥ त्वत्सहायेन त्वत्साहाय्येन । श्रीमद्भागवतास्वादम् तस्य रसानुभवं प्रचार्य्य । मासमात्रतः मासो मात्रा प्रमाणं

श्रीसूत उवाच—श्रुत्वैवं तद्वचो राजा मुदितश्चिन्तयातुरः । तदा विज्ञापयामास स्वाभिप्रायं तमुद्धवम् ॥ ५७ ॥
श्रीपरीक्षिदुवाच—कलिं तु निग्रहीष्यामि तात ते वचसि स्थितः । श्रीभागवतसंप्राप्तिः कथं मम भविष्यति ॥ ५८ ॥
अहं तु समनुग्राह्यस्तव पादतले श्रितः ।
श्रीसूत उवाच—श्रुत्वैतद्वचनं भूयोऽप्युद्धवस्तमुवाच ह ॥ ५९ ॥
श्रीउद्धव उवाच—राजंश्चिन्ता तु ते कापि नैव कार्य्या कथंचन । तवैव भगवच्छास्त्रे यतो मुख्याधिकारिता ॥ ६० ॥
एतावत्कालपर्य्यन्तं प्रायो भागवतश्रुतेः । वार्तामपि न जानन्ति मनुष्याः कर्मतत्पराः ॥ ६१ ॥
त्वत्प्रसादेन बहवो मनुष्या भारताजिरे । श्रीमद्भागवतप्राप्तौ सुखं प्राप्स्यन्ति शाश्वतम् ॥ ६२ ॥
नन्दनन्दनरूपस्तु श्रीशुको भगवानृषिः । श्रीमद्भागवतं तुभ्यं श्रावयिष्यत्यसंशयः ॥ ६३ ॥
तेन प्राप्स्यसि राजंस्त्वं नित्यं धाम व्रजेशितुः । श्रीभागवतसंचारस्ततो भुवि भविष्यति ॥ ६४ ॥
तस्मात् त्वं गच्छ राजेन्द्र कलिनिग्रहमाचर ।
श्रीसूत उवाच—इत्युक्तस्तं परिक्रम्य गतो राजा दिशां जये ॥ ६५ ॥
वज्रस्तु निजराज्येशं प्रतिबाहुं विधाय च । तत्रैव मातृभिः साकं तस्थौ भागवताशया ॥ ६६ ॥
अथ वृन्दावने मासं गोवर्द्धनसमीपतः । श्रीमद्भागवतास्वादस्तूद्धवेन प्रवर्तितः ॥ ६७ ॥
तस्मिन्नास्वाद्यमाने तु सच्चिदानन्दरूपिणी । प्रचकाशे हरेर्लीला सर्वतः कृष्ण एव च ॥ ६८ ॥

यस्य पारायणस्य तेन मासपारायणेनैवेत्यर्थः । यद्वा मास एव मासमात्रं तेन एतान् वज्रनाभादीन् । मधुद्विषः श्रीकृष्णस्य नित्यधाम्नि श्रीवृन्दावने नित्यस्वरूपे वा सम्यक् तद्विरहदुःखनिवृत्तिपूर्वकं प्रापयिष्यामि ॥ ५६ ॥ श्रीसूत उवाचेति व्यासोक्तिः । श्रुत्वेति । एवम् श्रीकृष्णेनेत्याद्युक्तप्रकारकमुद्धववचः श्रुत्वा मुदितोपि यतश्चिन्तयातुरोऽतस्तमुद्धवं प्रति स्वाभिप्रायं विज्ञापयामास ॥ ५७ ॥ श्रीपरीक्षिदुवाच कलिमिति सार्द्धेन । हे तात । ते तव वचसि स्थितः वचसा बद्धः । कथं केन प्रकारेण श्रीभागवतसंप्राप्तिः श्रीभागवतश्रवणस्यानायासेन सिद्धिरित्यर्थः । तद् ब्रूहीति शेषः ॥ ५८ ॥

ननु श्रीभागवतश्रवणसिद्धिप्रकारं तुभ्यमन्य एव कोऽपि कथयिष्यतीति चेत्तत्राह अहमित्यर्द्धेन । यतस्तव पादतले श्रितः आश्रितोऽहमतस्त्वयैव समनुग्राह्यः सम्यक् स्वकीयत्वेनानुग्रहं कर्तुं योग्योऽस्मीत्यर्थः । त्वमेव तच्छ्रवणसिद्ध्युपायप्रकारं वदेति भावः । श्रीसूत उवाच । श्रुत्वेति । एतत् श्रीभागवतश्रवणसिद्धिप्रश्नात्मकवचनम् । तम् परीक्षितम् ॥ ५९ ॥ यतो भगवच्छास्त्रे श्रीमद्भागवते तवैव मुख्याधिकारिता-मुख्याधिकारः । अतस्ते त्वया । कापि-स्वल्पापि । न कर्तुं योग्या ॥ ६० ॥ किञ्च एतावदिति । श्रीभागवतश्रुतेः तच्छ्रवणस्य । वार्ताम् प्रवृत्तिमपि । 'वार्ता प्रवृत्तिर्वृत्तान्त' इत्यमरसिंहः । एतावत्कालपर्य्यन्तम् अद्यपर्यंतमपि । केचिद्भक्ता जानन्तीत्याशयेन प्रायग्रहणम् । यतः कर्मतत्पराः लौकिकवैदिककर्मैकनिष्ठा अतः ॥ ६१ ॥ तर्हि कथं ते तां ज्ञास्यन्ति त्वत्प्रसादेनेत्याह । त्वत्प्रसादेन त्वदनुग्रहेण । भारताजिरे-भारतखण्डमेवाजिरम् प्राङ्गणं तस्मिन् । श्रीमद्भागवतप्राप्तौ यत्सुखं तत्प्राप्स्यन्ति । यद्वा श्रीमद्भागवतप्राप्तौ सत्यां शाश्वतम् नित्यम् । सुखमैहिकपारलौकिकं मोक्षं वा प्राप्स्यन्तीत्यन्वयः ॥ ६२ ॥ ननु को मां श्रावयिष्यतीति चेत्तत्राह नन्दनन्दनरूपस्त्विति द्वाभ्याम् । नन्दनन्दनरूपः नन्दनन्दनस्य रूपमिव रूपं यस्य सः श्यामसुन्दर इत्यर्थः । नन्दनन्दनं कृष्णं रूपयति निरूपयतीति वा । भगवान् जीवोत्पत्त्यादिज्ञाता । तदुक्तम् 'उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिम् । वेत्ति विद्यामविद्यां च भगवानिति शब्द्यते ॥' इति । ऋषिः सर्वज्ञः सर्वोपायोपदेष्टा वा । न संशयो यस्य सः श्रीशुकस्तुभ्यं श्रीमद्भागवतं श्रावयिष्यति । 'असंशयमि'ति पाठे क्रियाविशेषणम् ॥ ६३ ॥ तेनेति । तेन श्रीभागवतश्रवणेनैव । व्रजेशितुः श्रीकृष्णस्य । नित्यं धाम वैकुंठाख्यं नित्यस्वरूपं वा । ततस्तव भगवन्नित्यधामप्राप्त्यनन्तरम् । तव श्रीभागवतश्रवणान्तरं वा ॥ ६४ ॥ तस्मादित्यर्द्धकम् । तस्मात् कलियुगस्यैव सत्कर्मविघ्नकारित्वात् । इतिशब्दः प्रकारे । इत्येवम् राजन्नित्याद्युक्तप्रकारेणोक्तः श्रीपरीक्षित् । तम् उद्धवम् । दिशां जये तन्निमित्ते ॥ ६५ ॥ प्रतिबाहुम् तन्नामकं पुत्रम् । निजराज्येशम् स्वामिनं राजानमिति यावत्, विधाय कृत्वेत्यर्थः । 'विपूर्वो धा करोत्यर्थे' इत्युक्तेः । तत्रैव वृन्दावनान्तर्गतगोवर्द्धनगिरिनिकटसखीस्थले एव । मातृभिः रोहिण्यादिषोडशसहस्रकृष्णपत्नीभिः सह भागवताशया श्रीभागवतश्रवणेच्छया इत्यर्थः ॥ ६६ ॥ अथेति । अथ वज्रनाभस्थित्यनन्तरम् । मासम् मासपर्यन्तमित्यर्थः । गोवर्धनसमीपतः तत्समीपे सखीस्थले इत्यर्थः ॥ ६७ ॥ तस्मिन्निति । तस्मिन् श्रीमद्भागवते । आस्वाद्यमाने रस्यमाने सति । हरेः भक्तानां स्वविरहादिदुःखशमनशीलस्य श्रीकृष्णस्य । सर्वतः बहिरन्तरतः श्रीकृष्णोऽपि प्रचकाशे । 'सर्वान्त' इति पाठान्तरम् ॥ ६८ ॥ ततो यद्वृत्तं तदाह आत्मान-

आत्मानं च तदन्तस्थं सर्वेऽपि ददृशुस्तदा । वज्रस्तु दक्षिणे दृष्ट्वा कृष्णपादसरोरुहे ॥ ६९ ॥
स्वात्मानं कृष्णवैधुर्यान्मुक्तस्तद्भुव्यशोभत । ताश्च तन्मातरः कृष्णे रासरात्रिप्रकाशिनि ॥ ७० ॥
चन्द्रे कलाप्रभारूपमात्मानं वीक्ष्य विस्मिताः । स्वप्रेष्ठविरहव्याधिविमुक्ताः स्वपदं ययुः ॥ ७१ ॥
येऽन्ये च तत्र ते सर्वे नित्यलीलान्तरं गताः । व्यावहारिकलोकेभ्यः सद्योऽदर्शनमागताः ॥ ७२ ॥
गोवर्द्धननिकुञ्जेषु गोषु वृन्दावनादिषु । नित्यं कृष्णेन मोदन्ते दृश्यन्ते प्रेमतत्परैः ॥ ७३ ॥
श्रीसूत उवाच—य एतां भगवत्प्राप्तिं शृणुयाच्चापि कीर्तयेत् । तस्य वै भगवत्प्राप्तिर्दुःखहानिश्च जायते ॥ ७४ ॥

इति श्रीस्कन्दपुराणे अखिलेष्टश्रीभागवतमाहात्म्ये तृतीयोऽध्यायः ॥

## अथ चतुर्थोऽध्यायः

श्रीऋषय ऊचुः—साधु सूत चिरं जीव चिरमेवं प्रशाधि नः । श्रीभागवतमाहात्म्यमपूर्वं त्वन्मुखाच्छ्रुतम् ॥ १ ॥
तत्स्वरूपप्रमाणं च विधिं च श्रवणे वद । तद्वक्तुर्लक्षणं सूत श्रोतुश्चापि वदाधुना ॥ २ ॥
श्रीसूत उवाच—श्रीमद्भागवतस्याथ श्रीमद्भगवतः सदा । स्वरूपमेकमेवास्ति सच्चिदानन्दलक्षणम् ॥ ३ ॥

मित्यर्द्धकम् । सर्वेऽपि तत्रस्थाः साधारणा अपि । तदा आत्मानम् स्वात्मानं श्रीकृष्णान्तः स्थितं ददृशुः । तदानीं वज्रस्य श्रीकृष्णविरहदुःखनिवृत्तिपूर्वकविशेषानन्दप्राप्तिमाह वज्रेति । वज्रस्तु दक्षिणे श्रीकृष्णचरणारविन्दे ॥ ६९ ॥ स्वात्मानं दृष्ट्वा यदा कृष्णवैधुर्यात् श्रीकृष्णात्यन्तवियोगान्मुक्तस्तदा भुव्यशोभतेत्यन्वयः । तत्रान्वशोभतेति पाठान्तरम् । कृष्णपत्नीनान्तु ततोऽप्यधिकानन्दप्राप्तिर्जातेत्याह । ताः रोहिण्याद्यास्तन्मातरः वज्रनाभस्य प्रपितामह्यः कृष्णपत्न्य इति यावत् । रासरात्रिप्रकाशके श्रीकृष्णे नित्यानन्दरूपतया परमप्रेमास्पदे ॥ ७० ॥ चन्द्रे कलाः षोडश लम्बिन्याद्याः तासां प्रभाः चित्सहस्रप्रभाः । यद्वा कला षोडशकलात्मिका श्रीराधिका तस्याः प्रभाः किरणाः अंशा इति यावत् । तस्या एवांशविस्ताराः सर्वाः श्रीकृष्णनायिका इति कालिन्द्युक्तेः । तद्रूपं स्वात्मानं वीक्ष्य विशेषेण तत्परतया साक्षाद् दृष्ट्वा विस्मिताः सत्यः स्वप्रेष्ठस्य स्वस्यातिप्राणवल्लभस्य श्रीकृष्णस्य विरहदुःखाद्विमुक्ताः स्वपदम् श्रीराधाख्यं ययुः । अयं भावः—श्रीराधाकृष्णयोरेकरूपवत्त्वात्तासां श्रीराधाद्वारैव श्रीकृष्णप्राप्तिस्तया च तद्विरहदुःखनिवृत्तिश्चेति ॥ ७१ ॥ किञ्च तत्र कीर्तनादितत्पराणां तत्समाजस्थानामन्येषां चापि नित्यलीलाप्राप्तिमाह ये इति । तत्र वृन्दावनान्तर्गतसखीस्थले । तत्समाजे वा । ये वज्रादिभ्योऽन्ये हरिकीर्तनादिकर्त्तारस्ते सर्वे नित्यलीलान्तरं गताः सन्तः व्यवहारिकलोकेभ्यो जनेभ्यो वा । 'लोकस्तु भुवने जने' इत्यमरः । सद्योऽदर्शनमासर्वतो गताः प्राप्ताः ॥ ७२ ॥ ननु तर्हीदानीं तद्दर्शनेच्छूनां कुत्र तद्दर्शनं स्यात् वृन्दावनादिषु इत्याह । यद्वा प्रेमिभिस्त्विदानीमपि ते दृश्यंते इत्याह । निकुंजेष्विति । प्रेमतत्परैः प्रेमैकनिष्ठैः ॥ ७३ ॥ एतच्छ्रवणकीर्तनयोः फलं कथयन् श्रीसूत उवाचेति व्यासोक्तिः । यः श्रोता वक्ता च । एताम् पूर्वोक्ताम् । तस्य श्रोतुर्वक्तुश्च । दुःखहानिः संसारदुःखनिवृत्तिश्च जायते इति वै निश्चितं नात्र कोऽपि संदेहः कार्य इत्यर्थः ॥ ७४ ॥

इति श्रीस्कन्दपुराणे अखिलेष्टश्रीमद्भागवतमाहात्म्ये खाण्डलर्षिवंशोद्भवश्रीमथुरावसुदेवतीर्थनिवासि-
पौराणिकश्रीमोहनदेवात्मजहरिहरदेवकृतायां वैष्णवानन्दिन्यां टिप्पण्यां तृतीयोऽध्यायः ॥ ३ ॥

श्रीमद्भागवतस्याथ श्रोतुर्वक्तुश्च लक्षणम् । श्रवणे च विधिस्तुर्ये श्रीसूतेन निगद्यते ॥ १ ॥

तदेवमत्यद्भुतश्रीमद्भागवतस्य श्रवणं सर्वदुःखनिरासपूर्वककृष्णप्राप्तिकरमिति श्रुत्वा तत्स्वरूपादीनि जिज्ञासवः शौनकादय ऋषय आशीर्वाददानादिपूर्वकं श्रीसूतं प्रत्यूचुरिति व्यासोक्तिः साध्वित्यादिद्वयेन । हे सूत त्वं साधु यथा स्यात्तथा चिरम् बहुकालं जीवेत्याशीः । त्वं नाऽस्मान् एवमेव श्रीमद्भागवतमाहात्म्यादिकथनप्रकारेणैव । चिरं प्रशाधि प्रकर्षेण अस्मदभीप्सितभगवच्चरित्रकथनेन बहु शाधि शिक्षय । त्वन्मुखादपूर्वम् अद्भुतं श्रीमद्भागवतमाहात्म्यमस्माभिः श्रुतम् ॥ १ ॥ तत्स्वरूपमिति । तस्य श्रीभागवतस्य स्वरूपादीनि पञ्च वदेत्यन्वयः । तत्र स्वरूपम् यदात्मकं तत् । प्रमाणम् इयत्ताम् । श्रवणे च विधिम् प्रकारम् । तद्वक्तुः श्रीभागवतवाचकस्य लक्षणम् । वदेत्यस्य वाक्यभेदान्न पुनरुक्तिदोषः ॥ २ ॥ तत्र पञ्चानामपि प्रश्नानामुत्तरं वदन् श्रीसूत उवाचेति व्यासोक्तिः श्रीमद्भागवतस्येत्यारभ्य यावदध्यायसमाप्ति । तत्र तावत् श्रीभागवतस्य स्वरूपमाह श्रीमद्भागवतस्येति त्रिभिः । श्रीमद्भागवतस्य तन्नामकपुराणस्य । श्रीमद्भगवतः श्रीकृष्णस्य च स्वरूपं सदा एकमेवास्ति । अत्राहं प्रतिज्ञां करोमीति सूचयन्नाह अथेति । 'अथशब्दोऽन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपी'ति हैमः । यद्वा अथ कार्त्स्न्येन स्वरूपमेकमेवास्ति । किं तत्स्वरूपमित्यपेक्षायामाह । सच्चिदानन्द-

श्रीकृष्णासक्तभक्तानां तन्माधुर्य्यप्रकाशकम् । समुज्जृम्भति यद्वाक्यं विद्धि भागवतं हि तत् ॥ ४ ॥
ज्ञानविज्ञानभक्त्यङ्गचतुष्टयपरं वचः । मायामर्दनदक्षं च विद्धि भागवतं च तत् ॥ ५ ॥
प्रमाणं तस्य को वेद ह्यनन्तस्याक्षरात्मनः । ब्रह्मणे हरिणा तद्दिक् चतुःश्लोक्या प्रदर्शिता ॥ ६ ॥
तदानन्त्यावगाहे न स्वेप्सितावहनक्षमाः । त एव सन्ति भो विप्रा ब्रह्मविष्णुशिवादयः ॥ ७ ॥
मितबुद्ध्यादिवृत्तीनां मनुष्याणां हिताय च । परीक्षिच्छुकसंवादो योऽसौ व्यासेन कीर्तितः ॥ ८ ॥
ग्रन्थोऽष्टादशसाहस्रो योऽसौ भागवताभिधः । कलिग्राहगृहीतानां स एव परमाश्रयः ॥ ९ ॥

लक्षणम् सच्चिदानन्दमेव लक्षणम् स्वरूपमिति । तथेति पाठान्तरम् ॥ ३ ॥ किञ्च यस्य वाक्यं कृष्णभक्तानां कृष्णमाधुर्य्यप्रकाशकं सत् समुज्जृम्भति सम्यक् सर्वोत्कर्षेण वर्द्धते । तद्भागवतं विद्धीत्यन्वयः ॥ ४ ॥ किञ्च ज्ञानम् शास्त्रोत्थं च । विज्ञानमनुभवश्च । भक्तिः प्रेमलक्षणा च । अङ्गानि क्रमेण शास्त्रश्रवणमहावाक्यार्थनिदिध्यासननामसंकीर्तनादिरूपाणि तेषां साधनानि च । भक्तेरंगानि श्रवणादीनि वा इत्येवं चतुष्टयमेवं परं केवलं यस्मिन्नेवंभूतं यद्वचः अष्टादशसहस्रश्लोकात्मकम् । यच्च तैरेव ज्ञानादिभिः श्रवणादिद्वारा वा माया अविद्या तस्या मर्द्दने दक्षं च । तदेव श्रीभागवतं विद्धीत्यन्वयः ॥ ५ ॥

श्रीभागवतप्रमाणप्रश्नस्योत्तरमाह । यद्वा अथ श्रीभागवतस्य प्रमाणं वदन् तावदप्रमाणमाह प्रमाणमित्यादिसार्द्धत्रयेण । अनन्तस्य नान्तो देशतः कालतो वा यस्य । अत एव न क्षरति आत्मा-स्वरूपं यस्य तस्य श्रीभागवतस्य प्रमाणम्—इयत्ताम् । कः साधारणजातो वेद न कोऽपीत्यर्थः । यद्वा को ब्रह्मा किं वेदेति काकुः । न वेद इत्यर्थः । 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कमि'ति हैमः । हरिणा ब्रह्मणे यत् श्रीभागवतं चतुःश्लोक्या प्रदर्शितं तत्तु दिक् प्रदर्शिता दिङ्मात्रं प्रदर्शितमित्यर्थः । वस्तुतस्त्वप्रमाणं तस्य भगवद्रूपत्वादिति भावः । तादृक् प्रदर्शितं चेति पाठे । तादृक्–अनन्तमक्षरात्मकं श्रीभागवतं हरिणा ब्रह्मणे चतुःश्लोक्यैव प्रदर्शितमित्यन्वयः ॥ ६ ॥ तदेव स्फुटयति तदानन्त्यावगाहे इति । भो विप्राः–शौनकादयः । ये ब्रह्मविष्णुशिवादयः स्वेप्सितावहनक्षमाः–स्वेप्सितस्य स्ववाञ्छितस्यावहने प्रापणे क्षमाः समर्थाः । सर्वसमर्था इत्यर्थः । ते एव तदानन्त्यावगाहे–तस्य श्रीभागवतस्यानन्त्यविलोडने आनन्त्यज्ञाने इति यावत् । नैव सन्ति नैव समर्थाः सन्तीत्यर्थः । यद्वैवमन्वयः–ये ब्रह्मविष्णुशिवादयस्ते एव श्रीभागवतानन्त्यस्यावगाहेन तद्विचारेणेत्यर्थः । स्वेप्सितावहने स्ववाञ्छितज्ञाने । यद्वा स्वेप्सितस्य स्ववाञ्छितस्य ज्ञानादेः आवहने प्रापणे क्षमाः सन्ति । नान्येऽस्मदादय इत्यर्थः । तेषां पुरुषावतारकृततदुपदेशादिति भावः ॥ ७ ॥ ननु यदि तदानन्त्यं तर्हि किमित्यष्टादशसाहस्रश्लोकसंख्यानियमो लोके प्रसिद्धः, कथं च तन्मात्रेणैव जीवानां संसारान्निस्तार इति चेत् तत्राह । मितबुद्ध्यादिवृत्तीनाममित्यादिद्वयेन । मितबुद्ध्यादिवृत्तीनाम् अल्पबुद्ध्यादिवृत्तीनां मनुष्याणां हिताय परीक्षिच्छ्रोतुः शुकदेववक्तुश्च संवादो यस्मिन्नेवंभूतो योऽसौ व्यासेन कीर्तितो ग्रन्थः स एवाष्टादशसहस्रश्लोकसंख्याक इत्यर्थः । वस्तुतस्त्वानन्त्यमेव तस्येति भावः ॥ ८ ॥ योऽसावष्टादशसहस्रश्लोकसंख्याकः श्रीभागवताभिधो ग्रन्थः स एव कलिग्राहगृहीतानां परम् केवलमाश्रयः शरणम् । न तु यज्ञदानादिरिति भावः । यद्वा परमाश्रयः अतिविलक्षणाश्रय इत्यर्थः । अत्र कलेर्ग्राहत्वकथनेन संसारस्य समुद्रत्वं सूचितं तेन च श्रीभागवतस्यातिविलक्षणबृहच्चित्तरीत्वं च ध्वनितम् । अत्राधिक्योक्तिरूपकालङ्कारस्तत्रेदं बोद्धव्यम् । यथा नाविकेन वंशक्षेपिण्येरिता तरी कर्णधारस्य तरपण्यं दापयित्वा ग्राहाद्यगृहीतानेव तितीर्षतो जनान् नद्यादिष्वेव पारयति । तथेयमतिविलक्षणा बृहती चिन्मयी श्रीभागवतरूपा तरी तु ज्ञानमुद्राक्षेपणीहस्तेन वाचककर्णधारेणेरिता तच्चरणसेवारूपतरपण्यं श्रोतृनाव्यजनेभ्यस्तस्मै दापयित्वा स्वयं श्रोतृनाव्येनैवेरिता वा ध्याता आ पूजिता वा नमस्कृता वा कलिग्राहगृहीतानपि तितीर्षतो जनान् तन्मुखान्निःसार्य्य कामादिकच्छपे मानादिमकरे तृष्णादितिमिंगिले भयादिनक्रे अहंकारादिपाठीने निद्रातन्द्राद्यलगर्द्दे चिन्ताशोकादिमहावर्ते सुखदुःखादिकल्लोले संचितकर्माद्यगाधजलपूर्णे एवंभूते महाभयङ्करे संसारसमुद्रे झटिति पारयतीत्यस्या वैलक्षण्यमिति । यद्वैवमन्वयः । ननु यदि तदानन्त्यं तर्हि किमित्यष्टादशसाहस्रसंख्यानियम इत्यत आह । मितेति सपादेन । योऽसावष्टादशसाहस्रं श्लोका यस्मिन्नेवं भूतो ग्रन्थः शास्त्रं स्वल्पबुद्ध्यादिवृत्तीनां मनुष्याणां हिताय व्यासेन कीर्तित इत्यन्वयः । नन्वष्टादशसाहस्रश्लोकसंख्याकत्वेनैतादृशं भगवतीभागवतमप्यस्ति । लोकेऽपि देवीभागवतं श्रीमद्भागवतं चेति भागवतद्वयं श्रूयते, तर्हि कस्य प्रामाण्यमित्याशयेन तद्विशिनष्टि । परीक्षिच्छुकसम्वाद इति । परीक्षिदभिमन्युपुत्रो राजा । शुको व्यासपुत्रस्तयोः सम्वादो यस्मिन् सः । तथा च गोतमः । अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृण्वित्यादि । मत्स्यपुराणे । 'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्वै भागवतं विदुः ॥' पुराणान्तरे च 'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारम्भस्तद्वै भागवतं विदुरि'ति । यद्यपि भगवतीभागवतेऽष्टादशसाहस्रत्वं हयग्रीवब्रह्मविद्या वृत्रवधश्चास्ति, तथापि शुकप्रोक्तत्वं नास्तीति कृत्वा नातिव्याप्तिः । ननु 'व्यासेन कृत्वाथ शुभं पुराणं शुकाय पुत्राय च पाठितं तदि'ति भगवतीभागवतेऽपि वचनात्

अखिलोपेक्षया यस्तु कृष्णशास्त्रश्रुतौ व्रती । स चातको यथाम्भोदमुक्ते पाथसि चातकः ॥ १२ ॥
हंसः स्यात्सारमादत्ते यः श्रोता विविधाच्छ्रुतात् । दुग्धेनैक्यं गतात्तोयाद्यथा हंसोऽमलं पयः ॥ १३ ॥
शुकः सुष्ठु मितं वक्ति व्यासं श्रोतॄंश्च हर्षयन् । सुपाठितः शुको यद्वच्छिक्षकं पार्श्वगानपि ॥ १४ ॥
शब्दं नानिमिषो जातु करोत्यास्वादयन् रसम् । श्रोता स्निग्धो भवेन्मीनो मीनः क्षीरनिधौ यथा ॥१५॥
यस्तुदन् रसिकान् श्रोतॄन् विरौत्यज्ञो वृको हि सः । वेणुस्वनरसासक्तान् वृकोऽरण्ये मृगान् यथा ॥१६॥
भूरुण्डः शिक्षयेदन्यान् श्रुत्वा न स्वयमाचरेत् । यथा हिमवतः शृङ्गे भूरुण्डाख्यो विहङ्गमः ॥ १७ ॥
सर्वं श्रुतमुपादत्ते सारासारान्धधीर्वृषः । स्वादुद्राक्षां खलिं चापि निर्विशेषं यथा वृषः ॥ १८ ॥
स उष्ट्रो मधुरं मुञ्चन् विपरीते रमेत यः । यथा निम्बं चरत्युष्ट्रो हित्वाऽऽम्रमपि तद्युतम् ॥ १९ ॥
अन्येऽपि बहवो भेदा द्वयोर्भृङ्गखरादयः । विज्ञेयास्तत्तदाचारैस्तत्तत्प्रकृतिसंभवैः ॥ २० ॥

द्वितीयादिशब्देन खरादीनां ग्रहणम् ॥ ११ ॥ तत्र प्रवरश्रोतॄन् सदृष्टान्तान् कथयन् तल्लक्षणानि च लक्षयन् तत्र तावत्प्रवरं चातकश्रोतारं व्याचष्टे । अखिलोपेक्षयेति । यथा समुद्रादिजलपानत्यागेनाम्भोदमुक्ते पाथसि जले एव कृतपाननिश्चयश्चातकस्तथाऽखिलोपेक्षया सर्वशास्त्रश्रवणत्यागेनेत्यर्थः, यः श्रीभागवतश्रवणे एव कृतनियमः स चातकः श्रोतेत्यर्थः ॥ १२ ॥ हंसश्रोतारं व्याचष्टे हंस इति । यथा दुग्धेनैकभावं प्राप्तात् तोयात् जलात् हंसस्तत्तोयं त्यजन् अमलं पयो दुग्धमेव पिबति । तथा यो विविधात्श्रुतात् तोयस्थानीयानेकदृष्टान्तादियुक्तात् श्रीभागवतादिशास्त्रात् । दृष्टान्तादितोयं त्यजन् सारं भगवच्चरितामृतमेव । यद्वा सारम् साधनेषु श्रेष्ठं भगवद्धर्ममेव । 'सतामयं सारभृतां निसर्ग' इत्यत्र दशमे तथा दर्शनात् । आदत्ते गृह्णाति । स हंसः श्रोता स्यादित्यर्थः ॥ १३ ॥ शुकश्रोतारं व्याचष्टे । शुक इति । यद्वत् तथा । शिक्षकेन सुपाठितः शुकः स्वशिक्षकं पार्श्वगांश्च स्वनिकटवर्तिनो जनानपि हर्षयन् सुष्ठु मनोहरम् राधाकृष्ण गोपीकृष्ण इति नाम । मितम् पाठितानुसारमेवोच्चारयति । तथा यो व्यासम् स्वशिक्षकं गुरुम् । स्वनिकटवर्तिनः कथाश्रोतृजनांश्च हर्षयन् । सुष्ठु मितं हरे कृष्णे इत्यादि नाम वक्ति उच्चारयति । सः शुकः श्रोतेत्यर्थः ॥ १४ ॥ मत्स्यश्रोतारं व्याचष्टे । शब्दमिति । यथा अनिमिषो मीनो मत्स्यः क्षीरनिधौ तदन्तरेव । रसम् जलादिरसमास्वादयन् जातु कदाचित् किञ्चदपि शब्दं न करोति । तूर्ष्णीं भूत्वैव रसमास्वादयतीत्यर्थः । तथा यः कथारसं तूष्णीं भूत्वाऽनिमिष एवास्वादयति सः स्निग्धो मीनो मत्स्यश्रोतेत्यर्थः । यद्वा यथा मत्स्यः क्षीरनिधौ सजले तत्तीरे इत्यर्थः । चन्द्रं दृष्ट्वा तत्किरणद्वारा रसम् तदमृतमास्वादयन् सन् शब्दं न करोति । तूष्णीं भूत्वैव चन्द्रामृतमास्वादयतीत्यर्थः । तथा हरिकीर्तनसभारूपसमुद्रे यः स्वसम्मुखे वक्तृमुखचन्द्रं दृष्ट्वा तन्मुखचन्द्रे वर्तमानं श्रीकृष्णचरितामृतं तूष्णीं भूत्वाऽनिमिष एव तदनेककथनरूपकिरणद्वाराऽऽस्वादयति । सः स्निग्धो मीनो मत्स्यश्रोतेत्यन्ये ॥ १५ ॥ अथावरश्रोतॄन् सदृष्टान्तान् कथयन् तत्र तावदवरं वृकश्रोतारं व्याचष्टे । य इति । यथा वृकः 'भेड़िया' इति ख्यातो महावञ्चकोऽरण्ये वेणुस्वनरसासक्तान् मृगान् व्यथयन् विरौति विशिष्टशब्दं कुर्वन् विद्रावयति । तथा यो भगवच्चरित्रश्रवणासक्तान् श्रोतृजनान् तुदन् व्ययन् विद्रावयति, सोऽज्ञो महावञ्चको वृको वृकश्रोतेत्यर्थः ॥ १६ ॥ भूरुण्डश्रोतारं व्याचष्टे । भूरुण्ड इति । यथा हिमवतः शृङ्गे वर्तमानो भूरुण्ड इति आख्या नाम यस्य सः कश्चित्पत्रिविशेषः हंसादीनां धैर्य्यादिस्वभावं श्रुत्वा दृष्ट्वा च तत्स्वभावमन्येभ्यः शिक्षयति स्वयं च नैवाचरति स्वयं तु सिंहस्य जृम्भणसमये तद्दंष्ट्रालग्नं मांसं चञ्च्वा निःसार्य्य झटित्युड्डीयते । तथा हरिकीर्तनसभायां धैर्य्यादिसत्स्वभावं दृष्ट्वा श्रुत्वा चान्यजनेभ्यो यूयं धैर्य्येण गच्छत । कथां च धैर्य्येण शृणुतेत्यादिसत्स्वभावं शिक्षयेत् । स्वयं च नैवाचरेत् । स्वयं तु हरिकीर्तनसभामागत्य तत्रस्थान् श्रोतृजनान् दुर्वचनादिभिर्निःसार्य्य झटिति पलायते स भूरुण्डो भूरुण्डश्रोतेत्यर्थः । यथा भूरुण्डो साहसं मा कुरुत इत्यन्येभ्यः शिक्षयति स्वयं च नैवाचरति । तथा यः कथां श्रुत्वा साहसं मा कुरुत इत्यन्येभ्यः शिक्षयेत् स्वयं नैवाचरेत् स भूरुण्ड श्रोतेति केचित् ॥ १७ ॥ वृषश्रोतारं व्याचष्टे सर्वमिति । यथा सारासारान्धधीः सारे स्थिरांशे असारे तद्विपरीते च अन्धा धीर्बुद्धिर्यस्य । 'सारो बले स्थिरांशे च न्याये क्लीबं वरे त्रिष्वि'त्यमरसिंहः । एवंभूतो वृषः । स्वादु अतिमिष्टां द्राक्षाम् । खलिम् तिलकिट्टं चापि निर्विशेषम् विवेकशून्यं यथा स्यात्तथा खादति । तथा यः श्रुतम् भगवच्चरित्रं स्त्र्यादिचरित्रं चेति सर्वम् । निर्विशेषम् रसविवेकशून्यं यथा स्यात्तथोपादत्ते गृह्णाति । सः सारासारान्धधीः—सर्वसारे भगवच्चरित्रे सर्वासारे स्त्र्यादिचरित्रे चान्धा विवेकशून्या धीर्यस्य स एवंभूतो वृषो वृषश्रोतेत्यर्थः ॥ १८ ॥ उष्ट्रश्रोतारं व्याचष्टे । स इति । यथोष्ट्रस्तद्युतम् मधुररसेन युतमप्याम्रम् तत्फलादि हित्वा कटुनिम्बमेव चरति । तथा 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति श्रुत्युक्तरसयुतं मधुरं फलम् श्रीभागवतादि मुञ्चन् विपरिते महाकटुविषयविषस्य श्रवणे तद्वर्णने च रमते स उष्ट्रः—उष्ट्रश्रोतेत्यर्थः ॥ १९ ॥ अन्यानपि श्रोतृभेदान् सूचयति । अन्येऽपीति । द्वयोः प्रवरावरश्रोत्रोः पूर्वोक्तश्रोतृभेदादन्येऽपि भृङ्गखरादय इति बहवो भेदाः सन्ति । आदिशब्देन मयूरतित्तिरिमार्जारमहिषमण्डूकश्वानकाक्लूकादिभेदा ग्राह्याः । ते तु भेदास्तत्तत्प्रकृतिसम्भवैः तेषां तेषां प्रकृत्या स्वभावेन सम्भवो येषां तैस्तत्तदाचारैस्तेषां तेषा-

यः स्थित्वाऽभिमुखं प्रणम्य विधिवत् त्यक्तान्यवादो हरेर्लीलाः श्रोतुमभीप्सतेऽतिनिपुणो नम्रो विधीताञ्जलिः ।
शिष्यो विश्वसितोऽनुचिन्तनपरः प्रश्नेऽनुरक्तः शुचिर्नित्यं कृष्णजनप्रियो निगदितः श्रोता स वै वक्तृभिः ॥ २१ ॥
भगवन्मतिरनपेक्षः सुहृदो दीनेषु सानुकम्पो यः । बहुधाबोधनचतुरो वक्ता संमानितो मुनिभिः ॥ २२ ॥
अथ भारतभूस्थाने श्रीभागवतसेवने । विधिं शृणुत भो विप्रा येन स्यात् सुखसंततिः ॥ २३ ॥
राजसं सात्विकं चापि तामसं निर्गुणं तथा । चतुर्विधं तु विज्ञेयं श्रीभागवतसेवनम् ॥ २४ ॥
सप्ताहं यज्ञवद्यत्तु स श्रमं सत्वरं मुदा । सेवितं राजसं तत्तु बहुपूजादिशोभनम् ॥ २५ ॥
मासेन ऋतुना वापि श्रवणं स्वादसंयुतम् । सात्विकं यदनायासं समस्तानन्दवर्द्धनम् ॥ २६ ॥
तामसं यत्तु वर्षेण सालसं श्रद्धयाऽयुतम् । विस्मृतिस्मृतिसंयुक्तं सेवनं तच्च सौख्यदम् ॥ २७ ॥
वर्षमासदिनानां तु विमुच्य नियमाग्रहम् । सर्वदा प्रेमभक्त्यैव सेवनं निर्गुणं मतम् ॥ २८ ॥
पारीक्षितेऽपि संवादे निर्गुणं तत्प्रकीर्तितम् । तत्र सप्तदिनाख्यानं तदायुर्दिनसंख्यया ॥ २९ ॥
अन्यत्र त्रिगुणं चापि निर्गुणं च यथेच्छया । यथा कथंचित्कर्तव्यं सेवनं भगवच्छ्रुतेः ॥ ३० ॥

माचारैर्विज्ञेयाः विशेषेण विवेकपूर्वकं ज्ञातुं योग्याः ॥ २० ॥ सलक्षणं सर्वातिविलक्षणं मुख्यश्रोतारं निरूपयति । य इति । कृष्णजनप्रियाः—कृष्णजनाः प्रियाः यस्य । तेषां प्रियो वा । यः पुरुषः स्नानादिना शुचिर्भूत्वा । गुरोरभिमुखम् सम्मुखम् स्थित्वा । विधिवत् अष्टांगैः प्रणम्य च । तदानीं कथावधारणार्थं त्यक्तोऽन्यो लौकिको वैदिकश्च वादो येन । यतः कथारसग्रहणेऽतिनिपुणः । अत एव शिरसा नम्रो नम्रीभूतः । अत एव शिष्यः शिक्षयितुं योग्यः 'एतिस्तुशासित्यादिना' क्यप् । हरेर्लीलाः श्रोतुं विहिताञ्जलिः विधिम् विधानमितो गतोऽञ्जलिर्यस्य स विहिताञ्जलिरित्यर्थः । गृहीताञ्जलिरिति पाठे तु सुगमम् । अभीप्सते सर्वतो वाञ्छति । किञ्च । विश्वसितः श्रुतेऽर्थे कृतविश्वासः । ततस्तदनुचिन्तनपरः । संदेहे सति प्रश्नेऽनुरक्तः स एव वक्तृभिः शुकादिभिः श्रोता निगदितः नितराम् मुख्यत्वेन कथितः ॥ २१ ॥ एवं नाना श्रोतॄनभिधाय वक्तारं निरूपयति । भगवन्मतिरिति । भगवति श्रीकृष्णे मतिर्यस्य । अत एव न कृष्णातिरिक्तधनाद्यपेक्षा यस्य । अत एव सुहृदयः शोभनं हृदयस्येति योगविभागजनिताच्प्रत्ययान्तम् । सर्वजनहितकारीत्यर्थः । अत एव दीनजनेष्वनुकम्पासहितः । सुहृदेति तृतीयान्तपाठे शोभनहृदयेन । किञ्च बहुधा दृष्टान्तयुक्त्यादिना बोधनचतुरः स एव मुनिभिः व्यासादिभिर्वक्ता सम्मानितः सम्यक् आदरणीयत्वेन सर्वोद्धारकत्वेन वा । पतितपावनत्वेन वा । मानित इत्यर्थः । सुहृदो दीनजनेषु सानुकम्प इति पाठस्तु छन्दोभङ्गादनादृतोऽस्माभिः ॥ २२ ॥ एवं सुलक्षणं सर्वातिविलक्षणं वक्तारमभिधाय सफलं श्रवणविधिं कथयन् तावदृषीनभिमुखीकरोति । अथेति । अथ वक्तृश्रोतृलक्षणकथनानन्तरम् । विप्राः भगवच्चिन्तनेन दिवसयापकाः । तदुक्तम् 'वियदित्युच्यते व्योम प्रकारः प्रापणे मतः । दिवसं प्रापयन्त्येते तस्माद्विप्रा इति स्मृताः ॥' यद्वा विशेषेण यजमानं पिप्रति पूरयन्तीति विप्रास्तेषां सम्बुद्धौ हे विप्राः । येन—विधिना विधिश्रवणेन वा । सुखानां सन्ततिः बहुकालानेकसुखप्राप्तिरित्यर्थः । तं विधिं यूयं शृणुतेत्यन्वयः ॥ २३ ॥ राजसमिति । श्रीभागवतस्य सेवनम् पठनकथनश्रवणरूपम् । विज्ञेयम् विशेषेण विवेचनपूर्वकं ज्ञातुं योग्यम् श्रोतृजनैर्युष्माभिर्वेति शेषः ॥ २४ ॥ तदेव श्रीभागवतस्य चतुर्विधसेवनं कथयन् तत्र तावत् राजससेवनमाह सप्ताहमिति । बहुपूजादिना शोभनं यच्छ्रीभागवतस्य श्रवणं कीर्तनं चेत्यर्थः । सप्ताहम् सप्तदिनम् । सश्रमं सत्वरं यथा स्यात्तथा यज्ञवत् सेवितम् तत्सप्ताहसेवनं राजसमित्यन्वयः । यज्ञवत् बहुपूजादिना शोभनं सश्रमं सत्वरं यथा-स्यात्तथा सप्ताहं यच्छ्रवणकीर्तनादिना सेवितं तत् राजसं ज्ञेयमित्यन्वयो वा । बहुपूजादिपूर्वकमिति पाठान्तरे क्रियाविशेषणम् ॥२५॥ सात्त्विकसेवनमाह मासेनेति । मासेन । ऋतुना मासद्वयेनापि वा यच्छ्रीभागवतस्यानायासम् आयासरहितं श्रवणम् तत्सात्त्विकम् । यतः स्वादसंयुतम् सरसमतः समस्तानन्दवर्द्धनम् । श्रवणास्वादसंयुतमिति पाठे मासेन ऋतुना वापि सेवनमित्यध्याहारः । सात्त्विकं तच्च विज्ञेयमिति पाठान्तरम् ॥ २६ ॥

तामससेवनमाह तामसमिति । वर्षेण श्रीभागवतस्य सेवनं सौख्यदमपि यदि सालसम्—आलस्येन सहितम् । श्रद्धयाऽयुतम्—श्रद्धया रहितम् । विस्मृतिस्मृतिसंयुक्तं तर्हि तच्च सेवनं तामसमित्यन्वयः । सालसाश्रद्धयेति पाठान्तरम् ॥ २७ ॥ निर्गुणसेवनमाह । वर्षमासदिनानामिति । वर्षमासदिनानां नियमाग्रहं तु विमुच्य प्रेमभक्त्यैव श्रीभागवतस्य सर्वदा सेवनं निर्गुणम्—गुणातीतं ब्रह्मानन्दतुल्यमित्यर्थः । मतं व्यासाद्यैरिति शेषः । सर्वदेत्यनेन श्रीभागवतश्रवणादेर्नित्यत्वमावश्यकत्वं चोक्तम् । तेन चात्र मुहूर्तप्रश्नाद्यपेक्षा गुरुशुक्रास्तादिदोषश्च नास्तीति भावः । प्रेमास्वादसविस्तारमिति पाठान्तरम् ॥ २८ ॥ ननु श्रीभागवतस्य निर्गुणसेवनं विहाय किमिति राजससेवनमङ्गीकृतं परीक्षिता तत्राह । पारीक्षिते इति । पारीक्षिते सम्वादेऽपि । यत्परीक्षित्कृतश्रीभागवतसेवनं तदपि निर्गुणमेव प्रकीर्तितम् । तत्र पारीक्षिते सम्वादे यत्सप्तदिनाख्यानं तत्तु परीक्षिदायुर्दिनसंख्ययेति ज्ञेयम् ॥ २९ ॥ अन्यत्रेति मासादेरन्यत्र—सर्वदेत्यर्थः । यथा कथञ्चित् येन केन प्रकारेण विधिनिषेधाद्यपरिग्रहेणेति यावत् । यथा कथञ्चिदित्यनेन

ये श्रीकृष्णविहारैकभजनास्वादलोलुपाः । मुक्तावपि निराकांक्षास्तेषां भागवतं धनम् ॥ ३१ ॥
येऽपि संसारसंतापनिर्विण्णा: मोक्षकांक्षिणः । तेषां भवौषधं चैतत् कलौ सेव्यं प्रयत्नतः ॥ ३२ ॥
ये चापि विषयारामाः सांसारिकसुखस्पृहाः । तेषां तु कर्ममार्गेण या सिद्धिः साऽधुना कलौ ॥ ३३ ॥
सामर्थ्यधनविज्ञानाभावादत्यन्तदुर्लभा । तस्मात् तैरपि संसेव्या श्रीमद्भागवती कथा ॥ ३४ ॥
धनं पुत्रांस्तथा दारान् वाहनादि यशो गृहान् । असापत्न्यं च राज्यं च दद्याद्भागवती कथा ॥ ३५ ॥
इह लोके वरान् भुक्त्वा भोगान् वै मनसेप्सितान् । श्रीभागवतसंगेन यात्यन्ते श्रीहरेः पदम् ॥ ३६ ॥
यत्र भागवती वार्ता ये च तच्छ्रवणे रताः । तेषां संसेवनं कुर्याद्देहेन च धनेन च ॥ ३७ ॥
तदनुग्रहतोऽस्यापि श्रीभागवतसेवनम् । श्रीकृष्णव्यतिरिक्तं यत् तत्सर्वं धनसंज्ञितम् ॥ ३८ ॥

श्रीभागवतकथाश्रवणस्यावश्यकत्वं ध्वनितम् । तदुक्तं पाद्मे 'संस्मर्तव्यः सदा विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ॥' इति । भगवच्छ्रुतेः श्रीभागवतश्रवणस्य । भागवतश्रुतेरिति वक्तव्ये भगवच्छ्रीभागवतयोरैकरूप्याद्भगवच्छ्रुतेरित्युक्तम् । यद्वा । भगवतः श्रुतिः श्रवणं यस्मिन् तत् भगवच्छ्रुति श्रीभागवतं तस्य । यद्वा । भगवत्कर्तृका श्रुतिर्वेदः स च श्रीभागवतरूपस्तस्य । निर्गुणं सगुणं चापि सेवनं यथेच्छया भवेत् । तथा कर्तव्यमित्यन्वयः ॥ ३० ॥ मुक्तमुमुक्षुविषयिभिरपीदमेव सेव्यं नान्यदित्याह । ये इत्यादिचतुर्भिः । अत एवमुक्तावपि निराकांक्षाः प्रेमभक्तिरसिकास्तेषां श्रीभागवतमेव धनम् । किमुत मुक्तादीनामेतद्धनमिति फलितोऽर्थः ॥ ३१ ॥ ये इति । संसारो जन्ममरणात्मकः । अहंताममतात्मको वा । तस्य सन्तापेन दुःखेन निर्विण्णाः दुःखिताः । अत एव तस्मात्मोक्षकांक्षिणस्तेषामपि । एतत् ऐहिकामुष्मिकचतुर्विधपुरुषार्थसाधनैकधुरीणं श्रीभागवतमहापुराणमित्यर्थः । तैरपि प्रयत्नेन सर्वकर्मत्यागपूर्वकश्रवणाद्युपायेनेत्यर्थः । कथंभूतमेतत् भवौषधम् भवस्य अहंताममतात्मकसंसारस्यौषधम् औषधवन्निवर्तकमित्यर्थः । यद्वा भवन्तीति भवाः मुमुक्षुरोगाः कामक्रोधलोभमोहरागद्वेषहर्षशोकजन्ममरणादयस्तेषामौषधानि भगवल्लीलाकथा रसा यस्मिन् तद्भवौषधम् औषधनिधानमित्यर्थः । अत्रायमाशयः वैद्यो यथा जनान् सामान्यवातपित्तकफोत्थशीतज्वरादिरोगिणो दृष्ट्वा सामान्यौषधिभिः शुण्ठीमरिचपिप्पल्यादिभिस्तद्रोगान्निवर्तयति । ये तु जना बहुकालिकसर्वरसादिशुक्रान्तधातुगतविषमज्वरादिरोगग्रस्ता दवार्दिताश्च तान् ज्ञात्वा तु स्वौषधनिधानाच्चन्द्रोदयप्रभृतिरसान्निःसार्य्यामूल्यास्तत्पुटिकास्तेभ्यो दत्वा समूलांस्तद्रोगान्नाशयति । तथैवात्र वेदव्यासरूपोऽलौकिकवैद्यराजो जीवान् बहुकालिककामक्रोधलोभमोहरागद्वेषहर्षशोकजन्ममरणादिरोगग्रस्तान् सांसारिकविविधदुःखदवार्दितांश्च दृष्ट्वा तेषां च तत्कामादिरोगान् । सामान्यौषधस्थानीयैर्यज्ञदानजपतपआदिसाधनैरनिवार्य्यांश्च ज्ञात्वा समूलतद्रोगविनाशाय स्वौषधनिधानाच्छ्रीभागवतात् चन्द्रोदयप्रभृतिरसस्थानीयान् भगवल्लीलाकथारसान्निःसार्य्यामूल्यास्तत्कथनरूपास्तत्पुटिकास्तेभ्यो दत्वा तेषां तत्कामक्रोधलोभमोहरागद्वेषहर्षशोकजन्ममरणाद्यनेकान् रोगान् झटिति दूरीचकारेति । यदुक्तं श्रीशुकेन संसारसिन्धुमित्यादि ॥ ३२ ॥ किञ्च । ये इति युग्मकम् । विषयेषु शब्दादिष्वारामो येषां ते । अत एव संसारोऽहंताममतात्मकस्तस्मिन् भवानि सांसारिकाणि तानि च सुखानि च सांसारिकसुखानि तेषु स्पृहा वाञ्छा येषां तेषां कर्ममार्गेण या सिद्धिः सा अधुना कलौ ॥ ३३ ॥ सामर्थ्यं शरीरादेः धनम् वित्तं विज्ञानम् शास्त्रोत्थं तेषामभावादत्यन्तदुर्लभाऽस्ति । तस्मात् कलौ कर्मसिद्धेः दुर्लभत्वाद्धेतोः । तैर्विषयासक्तैरपि श्रीमद्भागवती कथा संसेव्या सम्यक् श्रद्धापूर्वकं सेवितुं योग्येत्यनेन श्रीभागवतस्यैव सर्वफलदातृत्वेन सर्वशास्त्रपुराणेभ्यः श्रेष्ठत्वं सर्ववेदतुल्यत्वं चोक्तम् । तथा च पृथ्वीं प्रति श्रीवाराहवचनम् 'सर्वेष्वपि पुराणेषु श्रेष्ठं भागवतं स्मृतम् । वेदतुल्यं फलं पाठे श्रवणे च तदर्द्धकम् ॥ अर्थश्रवणतश्चास्य पुण्यं दशगुणं स्मृतम् । वक्तुः स्याद्द्विगुणं पुण्यं व्याख्यातुश्च शताधिकम् ॥ अन्यानि च पुराणानि वैष्णवादीनि यानि च । महिमाकीर्तनं यत्र मम स्यान्मद्भक्तस्य वा ॥ मद्भक्तस्याथ वा यत्र तद्वेदार्थफलं स्मृतम् । भारतं वेदतुल्यं स्यादर्थतोऽधिकमुच्यते ॥ तत्रापि भगवद्गीता विष्णोर्नामसहस्रकम् । दशाधिकफलं प्रोक्तं भारतादपि सर्वशः ॥ श्रोतार्द्धफलमाप्नोति भक्तितः शृणुयात्तु यः । भारतादर्द्धफलकं रामायणमपीरितम्' । इति । अतः श्रीभागवतमेव सर्वैः श्रोतव्यमिति भावः ॥ ३४ ॥ सकामश्रोतॄणां श्रीभागवतश्रवणादिफलमाह । धनमित्यादिद्वयेन । दारान् स्त्रीः । वाहनादि हस्त्यश्वादि असापत्न्यम् निष्कण्टकम् ॥ ३५ ॥ इहेति । श्रोता इह मनुष्यलोके । वरान् श्रेष्ठान् । मनसेप्सितान् मनोवाञ्छितान् । हरिकीर्तनसभायां श्रीभागवतानाम् श्रीमद्वैष्णवानां सङ्गेन सत्संगेन । श्रीभागवतपुराणे संगेन तच्छ्रवणाद्यासक्त्या वा । अन्ते देहान्ते । पदम् वैकुण्ठं चरणारविन्दं वा याति ॥ ३६ ॥ एवंभूतश्रीभागवतकथाप्राप्तेः साधनमाह यत्रेति । यत्र येषु स्थानेषु कथावक्तृवैष्णवेषु वा भागवती वार्ता । ये च वैष्णवास्तस्य श्रीभागवतस्य श्रवणे रतास्तेषां वक्तृश्रोतॄणाम् । सम्यक् श्रद्धापूर्वकं सेवनं कुर्यात् । श्रवणोत्सुका इति पाठान्तरम् ॥ ३७ ॥ ननु तेषां संसेवनेन किं भवेत् तत्राह तदनुग्रहत इति । तेषाम् वक्तृश्रोतॄणामनुग्रहादस्य विषयिपुरुषस्यापि श्रीभागवतसेवनम् तत्कथाश्रवणप्राप्तिर्भवेदिति शेषः । तदेवं श्रीभागवतकथायाः श्रवणादिफलं प्राप्तिसाधनं चोक्तमिदानीं धनार्थिनोर्वक्तृश्रोत्रोर्धन-

कृष्णार्थीति धनार्थीति श्रोता वक्ता द्विधा मतः। यथा वक्ता तथा श्रोता तत्र सौख्यं विवर्द्धते ॥ ३९ ॥
उभयोर्वैपरीत्ये तु रसाभासे फलच्युतिः। किन्तु कृष्णार्थिनां सिद्धिर्विलम्बेनापि जायते ॥ ४० ॥
धनार्थिनस्तु संसिद्धिर्विधिसंपूर्णतावशात्। कृष्णार्थिनोऽगुणस्यापि प्रेमैव विधिरुत्तमः ॥ ४१ ॥
आसमाप्ति सकामेन कर्तव्यो हि विधिः स्वयम्। स्नातो नित्यक्रियां कृत्वा प्राश्य पादोदकं हरेः ॥ ४१ ॥
पुस्तकं च गुरुं चैव पूजयित्वोपचारतः। ब्रूयाद्वा शृणुयाद्वापि श्रीमद्भागवतं मुदा ॥ ४३ ॥
पयसा वा हविष्येण मौनं भोजनमाचरेत्। ब्रह्मचर्य्यमधः सुप्तिं क्रोधलोभादिवर्ज्जनम् ॥ ४४ ॥
कथान्ते कीर्तनं नित्यं समाप्तौ जागरं चरेत्। ब्राह्मणान् भोजयित्वा तु दक्षिणाभिः प्रतोषयेत् ॥ ४५ ॥
गुरवे वस्त्रभूषादि दत्वा गां च समर्पयेत्। एवं कृते विधाने तु लभते वाञ्छितं फलम् ॥ ४६ ॥

लक्षणमाह। श्रीकृष्णेत्यर्द्धकम् ॥ ३८ ॥ वक्तृश्रोत्रे द्वैविध्यं निरूपयन् परस्परस्वभावाद्यैक्येन तयोर्हरिचरित्रानुभवसुखं वर्द्धते इत्याह। कृष्णार्थीति। कृष्ण एवार्थः प्रयोजनमस्यास्तीति। धनमेव प्रयोजनमस्यास्तीति। श्रोता वक्ता च द्विप्रकारको मतो व्यासाद्यैरिति शेषः। यथा श्रोता यत्प्रकारकः श्रोता। तथा वक्ता तत्प्रकारको वक्ता। तत्र तयोः सौख्यं विशेषेण निःसीमत्वेन वर्द्धते ॥ ३९ ॥ तयोश्च परस्परस्वभावादिवैपरीत्येन तु फलच्युतिर्भवतीत्याह उभयोरित्यर्द्धेन। उभयोः वक्तृश्रोत्रोर्वैपरीत्ये स्वभावादिविपरीतत्वे तु रसाभासे सति फलच्युतिः यथार्थफलाभावो भवति। किन्त्वित्यर्द्धकम्। किन्तु यूयमन्यदपि शृणुतेत्यर्थः। कृष्णार्थिनाम् वक्तृणां श्रोतृणां च सिद्धिः कृष्णप्राप्तिरूपा विलम्बेन जायते अधिकारिणां तु शीघ्रमेवेत्यपिशब्दार्थः ॥ ४० ॥ किञ्च। धनार्थिन इत्यर्द्धकम्। धनार्थिनः श्रोतुर्वक्तुश्च। संसिद्धिः सम्यक् प्रतिष्ठापूर्वकधनप्राप्तिरूपा। विधिसम्पूर्णतावशात् विधेर्वक्ष्यमाणप्रकारस्य सम्पूर्णतावशाज्जायते इति पूर्वस्मादाकृष्यान्वयः। ननु कृष्णार्थिनः को विधिस्तस्य तु प्रेमैवेत्याह। कृष्णार्थिन इत्यर्द्धेन। अगुणस्य विरक्तस्य प्रेमैव उत्तमः उत्कृष्टो विधिर्नान्य इत्येवशब्दार्थः। अपीति निश्चितमेतत् पुराणेषु मुनिभिरित्यर्थः ॥ ४१ ॥ आसमाप्तीति आसमाप्ति–समाप्तिपर्य्यन्तम्। सकामेन–वक्त्रा श्रोत्रा च स्वयम्–स्वेनैव विधिः कर्तव्यः। विधिमेवाह। स्नात इत्यादिचतुर्भिः। नित्यक्रियाम्–संध्यावन्दनादिकाम्। एकवचनेन नित्यक्रियाणां संकोचेन करणं सूचितम्। प्राश्य प्रकर्षेण अकालमृत्युहरणमित्यादिमन्त्रोच्चारणपूर्वकं पीत्वा ॥ ४२ ॥ पुस्तकमिति। लिखितश्रीभागवतपुस्तकम्। तदभावे मुद्रितं वा। गुरुम्–कथावक्तारम्। उपचारैः–पाद्यार्घ्याचमनीयादिषोडशोपचारैः। पञ्चोपचारैर्वा। मुदा–हर्षेण ॥ ४३ ॥ पयसा–दुग्धेन। वा–अथवा हविष्येण–व्रीह्यादिना। हविष्यान्नमुक्तमग्निपुराणे 'व्रीहिषष्ठिकमुद्गाश्च कलायाः सलिलं पयः। श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ॥ अन्यच्च। चारुभक्ष्यं सक्तुकणाः शाकं दधि घृतं पयः। हविष्यं व्रतनक्तादावग्निकार्य्यादिके हितम्' इति अनयोरर्थः। व्रीहयः–बृहन्नाला बहुजलोत्पन्नाः शालय एतेषामपेक्षया किञ्चिदपकृष्टाः षष्टिरात्रेण पच्यमानाः षष्टिकाः 'साठीचावल' इति ख्याताः मुद्गाः मूग इति प्रसिद्धाः। कलायाः यवविशेषाः श्यामाकाः तृणधान्यविशेषाः। समाके चावल इति ख्याताः। नीवाराः मुन्यन्नभेदाः देवभात इति ख्याताः। गोधूमाः प्रसिद्धाः। आदिशब्देन यवादिपरिग्रहः। चारुभक्ष्यम् चिरोंजी छुहारे इति ख्यातम्। सक्तु सतुआ इति ख्यातम्। कणाः थूली इति ख्याताः। अन्यत्सुबोधम्। मौनमभाषणं तद्युक्तं भोजनमाचरेदिति सर्वत्र सम्बध्यते। ब्रह्मचर्य्यम् अष्टाङ्गम्। तदुक्तं मनुना 'दर्शनं स्पर्शनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रिया निर्वृतिरेव च ॥ एतन्मैथुनमष्टांगं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्य्यमि'त्यादि। अधःसुप्तिम् भूमौ शयनम्। क्रोधलोभादिवर्जनम्। आदिशब्देन मोहादेः परिग्रहः ॥ ४४ ॥ कथान्ते इति। समाप्तौ श्रीभागवतस्य पारायणादिसमाप्तौ तु जागरम् जागरणम् चरेत् कुर्य्यात् ॥ ४५ ॥ गुरवे इति। गुरवे श्रीभागवतवाचकाय वस्त्रभूषादि दत्वा। आदिशब्देन सोपस्करगृहभूमिहट्टदानादिपरिग्रहः। गां च समर्पयेत् सम्यक् श्रद्धाप्रेमपूर्वकमर्पयेदिति विध्यर्थे लिङ्। ननु समर्पणानन्तरम् पुराणादिकथावाचकस्य तत्पूजाद्रव्यग्रहणे 'वृत्त्यर्थं नैवयुञ्जीत प्राणैः कण्ठगतैरपी'त्यादिनिषेधश्रवणात्कथं तद्ग्रहणं सम्भवेदित्यत्रोच्यते। ये निजपूर्वपुरुषपरंपरया वृत्त्यर्थमेव कथां वाचयन्ति तेभ्यस्तु नायं दोषो देयः। तदेवोक्तं प्रायश्चित्तहेमाद्रौ धर्मशास्त्रात् 'येनास्य पितरो याता येन मातामहादयः। तेन मार्गेण गन्तव्यं सतां धर्ममनुस्मरन्नि'ति। ये च कथावृत्त्यभावेऽपि दत्तां पूजां गृह्णन्ति तेभ्योऽपि न दोषः। 'समादरेण श्रोतव्या पीठस्थस्य गुरोर्मुखात्। पूजा सम्यक् प्रकर्तव्या वैष्णवस्य च वैष्णवैरि'ति श्रवणात्। शाण्डिल्येऽपि 'पुराणं पूजयेत्पूर्वं वाचकं तदनन्तरम्। वस्त्रालंकारगोदानैर्दक्षिणाभिश्च सादरम् ॥ अन्यैश्च हेमदानैश्च भूमिदानैश्च भूरिभिः। पूजयेद्वाचकं भक्त्या बहुपुण्यफलाप्तये ॥ वाचकस्यार्चनेनैव पूजितोऽहं न संशयः। संतुष्टे तुष्टतां यामि वाचके नात्र संशयः ॥' इति गारुडे च। एवमन्यत्रापि वाचकपूजाविहितत्वात्। बृहदारण्यके याज्ञवल्क्येन जनकाद्गृहिणः ज्ञानदानदक्षिणाग्रहणश्रवणाच्चेत्यलमतिविस्तरेण। प्रकृतमनुसरामः। एवम् एवंप्रकारके विधाने कृते सति जनो वाञ्छितं फलं धनपुत्रादि लभते ॥ ४६ ॥ दारेति। दाराः स्त्रियः। अगाराणि गृहाणि।

दारागारसुतान् राज्यं धनादि च यदीप्सितम् । परन्तु शोभते नात्र सकामत्वं विडम्बनम् ॥ ४७ ॥
कृष्णप्राप्तिकरं शश्वत् प्रेमानन्दफलप्रदम् । श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ॥ ४८ ॥

इति श्रीस्कन्दपुराणेऽखिलेष्टश्रीमद्भागवतमाहात्म्ये चतुर्थोऽध्यायः समाप्तिश्रियमगमत् ॥ ४८ ॥
ॐ नमः सर्वबुद्धिसाक्षिणे श्रीकृष्णाय ॥

सुताः पुत्रास्तान्। यदीप्सितम् वाञ्छितम्। तत्सर्वं लभते। अत्र श्रीभागवतकथायाः कथने श्रवणे च। वक्तुः श्रोतुश्च सकामत्वं न शोभते यतो विडम्बनं हासास्पदम् ॥ ४४ ॥ ननु तर्हि किमस्ति श्रीभागवतश्रवणादेर्मुख्यं फलं तत्राह। कृष्णप्राप्तिकरमिति। कीरेण कृष्णद्वैपायनसुतश्रीशुकदेवेन। 'कीरशुकौ समावि'त्यमरः। 'कीरो व्याससुते शुके' इति च हैमः। भाषितम् कथितम् ॥ ४८ ॥

श्रीभागवतमाहात्म्यटिप्पणीयं कृता तया। राधाकृष्णौ च प्रीयेतां प्रीयन्तां वैष्णवा जनाः ॥ १ ॥

स्फुरदतुलितसर्वाङ्गीणरम्यार्थसार्थप्रचुररुचिरभावोत्कर्षहर्षप्रकर्षाम् ।
इति हरिहरसूरिः स्कान्दमाहात्म्यटीकां व्यधित निधिशराङ्कक्ष्मामिते १९५९ विक्रमाब्दे ॥ २ ॥

वेदव्यासमहर्षिसद्रसवचःपीयूषपाथोधरैर्भट्टश्रीपुरुषोत्तमैर्निजदृशा प्रेमस्पृशा पाविताम् ।
निध्यातामतिवामनार्य्यकृतिभिर्विद्वन्मुकुन्दैर्नुतां दृष्टां नन्दकिशोरपट्टकविना पश्यन्तु टीकामिमाम् ॥ ३ ॥

इति श्रीस्कन्दपुराणेऽखिलेष्टश्रीमद्भागवतमाहात्म्ये खाण्डलर्षिवंशोद्भवमथुरावसुदेवतीर्थनिवासिपौराणिक-श्रीमोहनदेवसूनुहरिहरदेवकृतायां वैष्णवानन्ददायिन्यां टिप्पण्यां चतुर्थोऽध्यायः समाप्तिश्रियमगमत् ॥

अनेन श्रीगोवर्द्धनधारी श्रीनन्दनन्दनः प्रीयताम्। तदर्प्पणं चास्तु ॥ १ ॥

# श्रीमद्भागवतभूषणम्

श्रीगणेशाय नमः

श्रीरुक्मिणीपतये द्वारकानाथाय नमः

लक्ष्मीनारायणं नत्वा गोपालः कुरुते सुधीः । सज्जनानंदसंदायि श्रीभागवतभूषणम् ॥ १ ॥

तत्र तावत् । अर्थवादाधिकरणसंमतां भक्त्यर्थं भगवन्महिमोक्तिरिति भक्तिपादीयां श्रीमदाचार्योक्तिमनुसृत्य महापुराणचक्रवर्तिनः श्रीमद्भागवतस्य महिमा प्रस्तूयते । यथा पाद्मीयोत्तरखंडे श्रीभागवतमाहात्म्ये षष्ठेऽध्याये सूत उवाच । तत्रायर्यौ षोडशवार्षिकस्तदा व्यासात्मजो ज्ञानमहाब्धिचन्द्रमाः । कथाऽवसाने निजलाभपूर्णः प्रेम्णा पठन् भागवतं शनैः शनैः ॥ श्रीशुक उवाच । निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् । पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् । श्रीमद्भागवते महामुनिकृते किंवाऽपरैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ श्रीमद्भागवतं पुराणतिलकं यद्वैष्णवानां प्रियं यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते । यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तत् शृण्वन् प्रपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥ तत्रैवाग्रे । रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा । कण्ठे संबद्ध्यते येन स वैकुंठप्रभुर्भवेत् ॥ तत्रैव तृतीयेऽध्याये । कुमारा ऊचुः । सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा । यस्याः श्रवणमात्रेण मुक्तिमत्र समाश्रयेत् ॥ ग्रन्थोऽष्टादशसाहस्रो द्वादस्कन्धसंमितः । परीक्षिच्छुकसंवादः शृणु भागवतं च तत् । तावत् संसारचक्रेऽस्मिन् भ्रमतेऽज्ञानतः पुमान् । यावत् कर्णगता नास्ति शुकशास्त्रकथा क्षणम् ॥ किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः । एकं भागवतं शास्त्रं मुक्तिदानेन गर्जति ॥ कथा भागवतस्याऽपि नित्यं भवति यद्गृहे । तद्गृहं तीर्थरूपं हि वसतां पापनाशनम् ॥ अश्वमेधसहस्राणि वाजपेयशतानि च । शुकशास्त्रकथायाश्च कलां नार्हंति षोडशीम् ॥ तावत् पापानि देहेऽस्मिन्निवसंति तपोधनाः । यावन्न श्रूयते सम्यक् श्रीमद्भागवतं नरैः ॥ न गंगा न गया काशी पुष्करं न प्रयागकम् । शुकशास्त्रकथायाश्च फलेन समतां नयेत् ॥ वेदादिर्वेदमाता च पौरुषं सूक्तमेव च । त्रयी भागवतं चैव द्वादशाऽक्षर एव च ॥ द्वादशात्मा प्रयागश्च कालः संवत्सरात्मकः । ब्राह्मणश्चाऽग्निहोत्रं च सुरभिर्द्वादशी तथा ॥ तुलसी च वसंतश्च पुरुषोत्तम एव च । एतेषां तत्त्वतः प्राज्ञैर्न पृथग्भाव इष्यते ॥ यश्च भागवतं शास्त्रं वाचयेदर्थतोऽनिशम् । जन्मकोटिकृतं पापं नश्यते नाऽत्र संशयः । श्लोकार्द्धं श्लोकपादं वा पठेद्भागवतं च यः । नित्यं पुण्यमवाप्नोति राजसूयाश्वमेधयोः ॥ उक्तं भागवतं नित्यं कृतं च हरिचिंतनम् । तुलसीपोषणं चैव धेनूनां सेवनं समम् ॥ अन्तकाले तु येनैव श्रूयते शुकशास्त्रवाक् । प्रीत्या तस्यैव वैकुण्ठं गोविंदोऽपि प्रयच्छति । हेमसिंहयुतं चैतत् वैष्णवाय ददाति च । कृष्णेन सह सायुज्यं स पुमान् लभते ध्रुवम् । आजन्ममात्रमपि येन शठेन किंचित् चित्तं विधाय शुकशास्त्रकथा न पीता । चंडालवच्च खरवद्बत तेन नीतं मिथ्या स्वजन्म जननीजनिदुःखभाजा ॥ जीवच्छवो निगदितः स तु पापकर्मा येन श्रुतं शुककथावचनं न किंचित् । धिक् तं नरं पशुसमं भुवि भारभूतमेवं वदंति दिवि देवसमाजमुख्याः ॥ दुर्लभैव कथा लोके श्रीमद्भागवतोद्भवा । कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते इत्यादि । तत्रैवाग्रे । सूत उवाच । यदा कृष्णो धरां त्यक्त्वा स्वपदं गंतुमुद्यतः । एकादशं परिश्रुत्य उद्धवो वाक्यमब्रवीत् ॥ उद्धव उवाच । त्वं तु यास्यसि गोविन्द भक्तकार्यं विधाय च । मच्चित्ते महती चिन्ता तां श्रुत्वा सुखमावह ॥ आगतोयं कलिर्घोरो भविष्यति पुनः खलाः । तत्संगेनैव सन्तोऽपि गमिष्यंत्युग्रतापदम् ॥ तदा भारवती भूमिर्गोरूपेयं कमाश्रयेत् । अन्यो न दृश्यते त्राता त्वत्तः कमललोचन । अतः सत्सु दयां कृत्वा भक्तवत्सल मा व्रज । भक्तार्थं स गुणो जातो निराकारोऽपि चिन्मयः॥ त्वद्वियोगेन ते भक्ताः कथं स्थास्यंति भूतले । निर्गुणोपासने कष्टमतः किंचिद्विचारय ॥ इत्युद्धववचः श्रुत्वा प्रभासे चिन्तयद्धरिः । भक्तावलंबनार्थाय किं विधेयं मयेति च ॥ स्वकीयं यद्भवेत्तेजस्तद्वै भागवते न्यधात् । तिरोधाय प्रविष्टोयं श्रीमद्भागवतार्णवम् । तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः ॥ सेवनात् श्रवणात् पाठात् दर्शनात् पापनाशिनीत्यादि । न चेदं भागवतमाहात्म्यं पाद्मनाम्ना कल्पितमिति वाच्यम् । आकाशीरामेश्वरीयेषु सर्वेषूपलंभात् । अथ तेषूपलब्धस्यापि कल्पितत्वं ब्रूषे हंतैवं तेषूपलब्धानां कार्तिकमाहात्म्यमाघमाहात्म्यगीतामाहात्म्यादीनामपि कल्पितत्वं स्यादिति विरम साहसात् । महामहिमोपेतैस्तोषिणीकारादिभिरुदाहृतत्वाच्च । बृहत्तोषिणीकारकृतहरिभक्तिविलासे च स्कांदे कृष्णार्जुनसंवादे । जीवितादधिकं येषां शास्त्रं भागवतं कलौ । न तेषां भवति क्लेशो याम्यः कल्पशतैरपि ॥ धारयंति गृहे नित्यं शास्त्रं भागवतं हि ये । आस्फोटयंति चलंति तेषां प्रेताः पितामहाः । यावद्दिनानि विप्रर्षे शास्त्रं भागवतं गृहे । तावत् पिबन्ति पितरः क्षीरं सर्पिर्मधूदकम् ॥ येऽर्चयंति सदा गेहे शास्त्रं भागवतं नराः । प्रीणितास्तैश्च विबुधा यावदाभूतसंप्लवम् । यच्छन्ति वैष्णवे भक्त्या शास्त्रं भागवतं हि ये । कल्पकोटिसहस्राणि विष्णुलोके वसंति ते ॥ श्लोकार्धं श्लोकपादं वा वरं भागवतं गृहे । शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः ॥ न यस्य तिष्ठते गेहे शास्त्रं

भागवतं कलौ । न तस्य पुनरावृत्तिर्याम्यात् पाशात् कदाचन ।। कथं स वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ । गृहे न तिष्ठते यस्य स विप्रः श्वपचाधमः ।। यत्र यत्र भवेद्विप्र शास्त्रं भागवतं कलौ । तत्र तत्र हरिर्याति त्रिदशैः सह नारद ।। तत्र सर्वाणि तीर्थानि सर्वे यज्ञाः सदक्षिणाः । यत्र भागवतं शास्त्रं पूजितं तिष्ठते गृहे ।। अत्र तिष्ठते इत्यात्मनेपदमार्षम् । चान्द्रादिमतेन वा । 'चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमि'ति न्यायसुधोक्तेः । तत्रैव नित्यं भागवतं यस्तु पुराणं पठते नरः । प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ।। श्लोकार्धं श्लोकपादं वा नित्यं भागवतोद्भवम् । पठेत् शृणोति वा भक्त्या गोसहस्रफलं लभेत ।। यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने । अष्टादशपुराणानां फलं प्राप्नोति मानवः । तत्रैव स्कांदे मार्कण्डेयभगीरथसंवादे । यो हि भागवते शास्त्रे विघ्नमाचरते पुमान् । नाभिनंदति दुष्टात्मा कुलानां पातयेत् शतम् ।। तत्रैव पाद्मे गौतमांबरीषसंवादे । अंबरीषशुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् ।। श्लोकं भागवतं वापि श्लोकार्धं पदमेव वा । लिखितं तिष्ठते यस्य गृहे तस्य सदा हरिः ।। वसते नाऽत्र संन्देहो देवदेवो जनार्दनः । यत्तु शुकाय प्रोक्तं देवीभागवतमस्य विषय इति तन्न । राज्ञा पृष्टं शुकेनोक्तं श्रीमद्भागवतं परमिति बृहन्नारदीयस्थपुरुषोत्तममाहात्म्यीयद्वितीयाध्यायवचोविरोधात् । शुकमध्यापयामास निवृत्तिनिरतं मुनिः । सूतमध्यापयामास महाराजं परीक्षितमि'ति श्रीमद्भागवतमुपक्रम्य श्रीमद्भागवतोक्तेश्च । 'शुकाय प्रोक्तमिति त्वदीयविग्रहांगीकारेऽपि अस्मदभीष्टसिद्धेश्च । अत एव गृहे तस्य सदा हरिरित्युपसंहारः । इतरथा 'देवी तस्य सदा गृहे' इत्युपसंहारमकरिष्यत् । प्रकृतिभावाभावेन रंधनाय स्थालीतिवच्चतुर्थीसमासस्याप्राप्तेश्च । न च साधनं कृतेति भाष्योक्तवचनेन सः पस्पशाह्निकीयधर्माय नियम इति भाष्यस्थप्रदीपोद्योतपर्यालोचनया तस्याऽपि तत्राऽप्रवृत्तेः । अत एव 'चतुर्थीतदर्थे' तिसूत्रे रक्षितग्रहणं चरितार्थम् । प्रकृतिविकृतिभावाऽभावेऽपि साधनं कृतेत्यनेन चतुर्थीसमासे तद्वैयर्थ्यं स्पष्टमेव । ध्वनितं चेदमश्वघासादयस्तु षष्ठीसमासा इति वदद्भिर्भाष्यकृद्भिः । घासशब्दो हि घञंतः । तत्रैव स्कान्दे द्वारकामाहात्म्ये मार्कण्डेयेन्द्रद्युम्नसंवादे । श्रीमद्भागवतं शास्त्रं यः पठेत् कृष्णसन्निधौ । कुलकोटिशतैर्युक्तः क्रीडते योगिभिः सह ।। तत्रैव गारुडे पाद्मे च । 'अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः ।। पुराणानां साररूपः साक्षात् भागवतोदितः । द्वादशस्कन्धयुक्तोऽयं शतविच्छेदसंयुतः ।। ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ।' तत्रैव पाद्मे उन्मिलिनीमाहात्म्ये अंबरीषं प्रति गौतमः । नित्यं नामसहस्रेण भक्त्या स्तौषि जनार्दनम् । पुराणं त्वं भागवतं पठसे पुरतो हरेः । तत्रैव स्कान्दे ब्रह्मनारदसंवादे प्रह्लादसंहितायां च एकादशीजागरं प्रकृत्य 'श्रीमद्भागवतं भक्त्या पठते विष्णुसन्निधौ । जागरे तत्पदं याति कुलवृन्दसमन्वितः ।। वृन्दावनझाशीग्रामपुण्यग्रामादावुपलभ्यमाने रामकृष्णभट्टोदाहृते गौरीतन्त्रे 'गायत्रीभाष्यरूपोऽयं द्वादशस्कन्धसंयुतः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ।। मथुरादावुपलभ्यमाने हरिभक्तिविलासाद्युदाहृते स्कान्दे भागवतमाहात्म्ये ।। ४ ।। कृष्णप्राप्तिकरं शश्वत् प्रेमाऽऽनन्दफलप्रदम् । श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ।। परीक्षित्शुकसंवादो योऽसौ व्यासेन कीर्तितः । कलिग्राहगृहीतानां स एव परमाश्रयः ।। वर्षमासदिनानां तु विमुच्य नियमाऽऽग्रहम् । प्रेमास्वादसविस्तारं सेवनं निर्गुणं मतम् ।। पारीक्षितेऽपि संवादे निर्गुणं तत्प्रकीर्तितम् । तत्र सप्तदिनाख्यानं तदायुर्दिनसंख्यया ।। प्रमाणं तस्य को वेद ह्यनंतस्याऽक्षरात्मनः । ब्रह्मणे हरिणा तद्दिक् चतुःश्लोक्या प्रदर्शितेत्यादि । रामकृष्णभट्टोदाहृते पाद्मे चाऽन्यत्र 'पुराणेषु तु सर्वेषु श्रीमद्भागवतं परम् । यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः ।। जन्माद्यस्य यतश्चेति धीमद्यन्तमुपावददित्यादि । तत्रैव नारदीये च ।। ४ ।। श्रीमद्भागवतं नाम पुराणं वेदसंमितम् । तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः ।। व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च । पारीक्षितमुपाख्यानमितीदं समुदाहृतम् ।। परीक्षित्शुकसंवादे सृतीद्वयनिरूपणम् । ब्रह्मनारदसंवादेऽवतारचरितामृतम् ।। पुराणलक्षणं चैव सृष्टिकारणसंभवः । द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता ।। चरिते विदुरस्याऽथ मैत्रेयेण समागमः। सृष्टिप्रकरणं पश्चाद् ब्रह्मणः परमात्मनः ।। कापिलं सांख्यमप्यत्र तृतीयोऽयमुदाहृतः । सत्याश्चरितमादौ तु ध्रुवस्य चरिते ततः ।। पृथोः पुण्यं समाख्यानं ततः प्राचीनबर्हिषः । इत्येष तुर्यो गदितो विसर्गे स्कन्ध उत्तमः। प्रियव्रतस्य चरितं तद्वंश्यानां च पुण्यदम् । ब्रह्माण्डांतर्गतानां च लोकानां वर्णनं ततः । नरकस्थितिरित्येष संस्थाने पञ्चमो मतः । अजामिलस्य चरितं दक्षसृष्टिनिरूपणम् ।। वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम् । षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषणे । प्रह्लादचरितं पुण्यं वर्णाश्रमनिरूपणम् । सप्तमोऽयं समुदितः स्कन्धो भागवते शुभः ।। गजेन्द्रमोक्षणाख्यानं मन्वन्तरनिरूपणम् । समुद्रमन्थनं चैव बलिदैत्यस्य बन्धनम् ।। मत्स्याऽवतारचरितमष्टमोऽयं प्रकीर्तितः । सूर्यवंशमाख्यानं सोमवंशनिरूपणम् ।। वंशानुचरितं प्रोक्तो नवमोऽयं महामते । कृष्णस्य बालचरितं कौमारं च व्रजस्थितिः ।। भूभारहरणं चाऽत्र निरोधे दशमः स्मृतः । नारदेन तु संवादो वसुदेवस्य कीर्तितः ।। यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च । यादवानां मिथोंऽतश्च मुक्तावेकादशः स्मृतः ।। भविष्यत्कलिनिर्देशो मोक्षो राज्ञः परीक्षितः । वेदशाखाप्रणयनं मार्कण्डेयतपःक्रियाः ।। सौरी विभूतिरुदिता सात्वती च ततः परम् । पुराणसंख्याकथनमाश्रये द्वादशोऽह्ययम् ।। इत्येवं कथितं वत्स श्रीमद्भागवतं तव । वक्तुः श्रोतुश्चोपदेष्टुरनुमोदितुरेव च ।। साहाय्यकर्तुर्गदितं भुक्तिमुक्तिविमुक्तिदम् । प्रौष्ठपद्यां पूर्णिमायां हेमसिंहसमन्वितम् । इदं भागवतं देयं द्विजाय प्रीतिपूर्वकम् ।। संपूज्य वस्त्रहेमाद्यैर्भगवद्भक्तिमिच्छते । इदं च भागवतमाहात्म्यं मथुरायां कृष्णातीरस्थमेणवलीग्रामे च दृष्टम् । स्कांदे च मार्गशीर्षमाहात्म्ये । वैष्णवानां व्रतानां च कुर्यात्स्वीकरणं बुधः । मत्प्रियं शृणुयाच्छश्वत्

श्रीमद्भागवतं परम् ॥ श्रीमद्भागवतं नाम पुराणं लोकविश्रुतम्। शृणुयाच्छ्रद्धया युक्तो मम संतोषकारकम् ॥ नित्यं भागवतं यस्तु पुराणं पठते नरः। प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ॥ श्रीमद्भागवतं पुण्यं दृष्ट्वा नोत्तिष्ठते हि यः। संवत्सरात्मकं पुण्यं विलयं याति पुत्रक। श्रीमद्भागवतं दृष्ट्वा प्रत्युत्थानाभिवादनैः ॥ संमानयेत तं दृष्ट्वा भवेत्प्रीतिर्ममातुला। दृष्ट्वा भागवतं दूरात् प्रक्रमेत्संमुखं हि यः ॥ पदेपदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम्। उत्थाय प्रणमेद्यो वै श्रीमद्भागवतं नरः ॥ धनं पुत्रांस्तथा दारान् भक्तिं च प्रकरोम्यहम्। महाराजोपचारैश्च श्रीमद्भागवतं सुत। शृण्वंति ये नरा भक्त्या तस्य वश्यो भवाम्यहम्। ममोत्सवेषु सर्वेषु आदौ भागवतं परम्। समर्चयंति भक्त्या ये ममाभेदेन सुव्रत ॥ वस्त्रालंकरणैः प्रेष्ठैर्धूपदीपोपहारकैः। वशीकृतो दृढं वत्स स्त्रियश्च सत्पतिं यथा ॥ नारदपंचरात्रे पंचविंशतितमे पटले। यथा विष्णोः सदाऽभीष्टं नैवेद्यं शालिसंभवम्। शुकाय भवता दत्तं पुराणमिव तन्महत्। वल्लभं देवदेवस्य तथेदं तुलसीदलमि'ति दिक्। विशेषस्तु मत्कृते भक्तिभूषणे द्रष्टव्यः।

इति श्रीनारायणपरायणश्रीकृष्णातीरश्रीकरहाटक्षेत्रवासिवासुदेवाचार्यसुतनारायणाचार्याग्रजगंगागर्भगोपालाचार्यविरचिते श्रीभागवतभूषणे परमानन्दः प्रथमोल्लासः ॥ १ ॥

श्रीकृष्णाय नमः। स्यादेतत्। सकलभूमण्डलप्रख्यातश्रीमद्भागवतस्याऽयं महामहिमा वक्तुमशक्यः। तस्य शंकापंकविलिप्तत्वनिबंधानुदाहृतत्वदृढबंधत्वपदलालित्यहेतुकप्रामाण्याऽनधिकरणमेवदित्यनुमितिविषयत्वेन पौरुषेयत्वे निश्चिते 'पाखंडशैववामाद्यैर्वेदमार्गाः कलौ युगे।' इति विजयध्वजसंमतदशमस्कंधीयश्रीमद्भागवतवचनबोधितदुर्मार्गत्वमसहमानैः पाखंडजंगमादिशैवतांत्रिकवामादिभिरुत्प्रेक्षितस्य बोपदेवकृतमिति प्रलापस्य प्रामाणिकत्वादिति चेन्न। त्वदीयहेतुचतुष्टयस्याऽऽभासत्वेनाऽसाधकत्वात्। तथाहि काठकादिसंज्ञादर्शनेन वेदस्य पौरुषेयत्वं शंकितं जैमिनिना। 'असदेवेदमग्र आसीत्ततो वै सदजायते'त्यादिश्रुत्या ब्रह्मण उत्पत्तिः शंकिता, 'असंभवस्तु सतोऽनुपपत्तेरि'त्यधिकरणे भगवता बादरायणेन। पौरुषेयत्वेन स्मृतीनामप्रामाण्यमाशंकितं माधवेन। अतस्तेषु शंकापंकविलिप्तेषु अप्रामाण्यगंधस्याऽप्यभावेनाऽऽद्यो हेतुर्व्यभिचरितः। अयं तु विशेषः- 'त्रयो वेदस्य कर्तारो मुनिभांडनिशाचराः' इति वदद्भिः सौगतैर्निर्दोषेश्वरकृतत्वेनाऽऽप्तवाक्यत्वाद्वेदः प्रमाणमिति वदद्भिस्तार्किकैश्च वेदस्य पौरुषेयत्वमंगीकृतम्। अस्य तु तत् केनाऽपि नेति। प्रत्युत ललितासहस्रनामदेवीभागवतव्याख्यानादिषु भास्कररजनीलकंठभट्टप्रभृतिभिः शाक्तैः शिवतत्त्वविवेकतत्त्वकौमुद्यादिनिबंधेषु अप्पयदीक्षितभट्टोजिदीक्षितप्रभृतिभिः शैवैः। "कृष्णः सख्यश्च राधाया भक्ता राधापदाश्रयाः। तद्भक्तभावतः सेव्या नमस्या राधिकाऽऽश्रितैः ॥ न च कर्माणि कुर्वीत नान्यं देवं यजेत् क्वचित्। नोपोष्यैकादशी वाऽपि न हि सा राधिका परा ॥ वैष्णवत्वाभिमानोऽपि नैव धार्यो हृदि क्वचित्।" इत्यादिचोदनाप्रतिपादकेषु निबन्धेषु राधावल्लभीयैश्चाऽस्य श्रीमद्भागवतस्य पुराणत्वमेवोररीकृतम्। अथ तत्र जैमिन्यादिभिः शंकाबाधकमुक्तिमिति विशेषः। अबाधिता खलु शंका प्रामाण्यमपनयति नतु बाधिताऽपीति अभियुक्तोक्तेरिति चेदत्रापि बाधकं अस्य यामा ७, ५, ३, १, ऋचं जप्त्वा त्रिवारं विष्णुमंदिरे। फलं भागवतं तस्य लभते नात्र संशयः ॥ जप्त्वा आभरतीमंत्रं त्रिवारं च दिने दिने। भारताख्यानमखिलं पारायणफलं लभेत् २, ८, १, रामायणफलं भद्रे भद्रया च जपेदृचम्। पारायणफलं सर्वं शतकोटिप्रविस्तरम् ७, ५, ३, १, इति शौनकोक्तऋग्विधानं १ तत्र तु प्रथमे स्कंधे सूतर्षीणां समागमः। 'व्यासस्य चरितं पुण्यं पांडवानां तथैव चे'त्यादिना द्वादशस्कंधाऽनुक्रमणीनिरूपकं रामकृष्णभट्टोदाहृतं नारदीयं २ 'एवं सर्वं भागवतं श्रीहरेरंगमुच्यते। तत्र श्रीदशमः श्रेष्ठस्तत्र गोकुलकेलयः ॥ तत्राऽपि श्रीरासलीला गोपिकागीतिका ततः। तत्राटवीति पद्यं तु प्रोच्यते परमं वरम्। तत्रैव चरमः श्लोकः प्रेमनिर्यासरूपकः।' इति मथुराक्षेत्रझांसीग्रामादावुपलभ्यमानं गौरीतंत्रीयद्वितीयपटलं ३ परीक्षित्शुकसंवादः श्रीमद्भागवताऽभिधः। यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः ॥ जन्माद्यस्य यतश्चेति धीमद्वान्तमुपावदत्। शुकोक्तं ब्रह्मराताय सदसि ब्रह्मवादिनाम्। श्रीमद्भागवतं नाम द्युनद्यां तमसः परम्।' इत्यादिरामकृष्णभट्टोदाहृतं पाद्मीयं बृहत्भागवतमाहात्म्यं ४ 'वाराहं वामनं पाद्मं गारुडं वैष्णवं तथा। श्रीमद्भागवतं विष्णुपरं सात्विकमुच्यते ॥' इति पाद्मीयोत्तरखंडं ५ 'गारुडं वामनं पाद्मं श्रीमद्भागवतं तथा। एभिश्चतुर्भिः श्रीविष्णुर्गीयते पुरुषोत्तमः ॥' इतीशानसंहितास्थं स्कांदम् ६। पूर्वोक्तवचनकदंबकं च वरीवर्तीति विशेषाऽभावात्। द्वितीयस्त्वसिद्धः। 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम्। इत्यस्य हृदयं साक्षान्नान्यो मद्वेद कश्चन।' इति भागवत इति श्रीमन्मध्वाचार्यचरणकृतब्रह्मसूत्रभाष्ये १ प्रथमाध्यायस्य तृतीये पादे चरमाधिकरणे तत्त्वप्रकाशिकायां २ तात्पर्यचंद्रिकायां ३ दिनत्रयमीमांसायां ४ क्षीरनिधौ ५ सदाचारस्मृतिव्याख्यानेषु ६ स्मृतिकौस्तुभे ७ स्मृत्यर्थसागरे ८ निर्णयरत्ने ९ विद्यारण्यस्वामिकृतजीवन्मुक्तिप्रकरणे पुण्यग्रामादावुपलभ्यमाने १० हेमाद्रिकृतव्रतखंडदानखंडयोः ११ वामनजयंतीनिर्णयप्रकरणे निर्णयसिंधौ १२ पूजाप्रकरणे भट्टोजिदीक्षिताह्निके १३ नागोजीभट्टकृताह्निकशेखर'गुरोरनृत' इति सूत्रस्थशब्दरत्नरामायणव्याख्यानसप्तशतीव्याख्यानेषु १४ अनंतदेवकृतसंस्कारकौस्तुभमथुरासेत्वोः १५ श्राद्धमयूखव्यवहारमयूखयोः १६ कालदिनकरद्योते १७ विधानपारिजाते भोजनप्रकरणे १८ प्रयोगपारिजाते १९ आचाररत्ने २० संवत्सरप्रदीपे कलिधर्मप्रकरणे २१ कालनिर्णये तत्रैव २२ कालनिर्णयदीपिकाविवरणे देवपूजाप्रकरणे २३ शंकराचार्यकृतपद्मपुराणीयवासुदेवसहस्र-

नामाऽपरपर्यायविष्णुसहस्रनामभाष्ये पुण्यग्रामादावुपलब्धे 'स आश्रयः परं ब्रह्म परमात्मा परात् परः' इति भागवत इति प्रथमशतके पंचमनामव्याख्याने। 'पश्यंत्यदोरूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतमित्यादि भागवत इति पंचपंचाशन्नामव्याख्याने। 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहाऽस्य धत्ते। स्थित्यादये हरिविरिंचिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥' इति भागवत इति द्वितीयशतके नवमनामव्याख्याने। 'छन्दोमयेन गरुडेन विगाह्यमान इति भागवत इति तृतीयशतके पंचदशनामव्याख्याने २४ 'परमहंसधर्मो भागवते पुराणे कृष्णेनोद्धवायोपदिष्टः।' इति शंकराचार्यकृतचतुर्दशमतविवेके पुरुषोत्तममहाराजोदाहृते २५ भागवतमात्रवर्णितमृद्भक्षणानुवादके तत्कृतगोविंदाष्टके नंदमिश्रोदाहृते २६ रामार्चनचंद्रिकायां २७ तत्कृतरामतापिनीव्याख्यायां २८ 'कृष्णस्तु भगवान् स्वयमि'ति भागवत इति वल्लभाचार्यकृतनिबंधे २९ उत्सवप्रताने ३० शुद्धाद्वैतमार्तंडे ३१ विद्वन्मंडने ३२ पुरुषोत्तममहाराजकृतसुवर्णसूत्रे ३३ निंबार्कीयस्वमतनिर्णयसिंधौ ३४ हरिभक्तिविलासे ३५ रामानुजीयरामतापिनीव्याख्याने ३६ तत्कृतसारसंग्रहे ३७ अप्पयदीक्षितकृतशिवतत्त्वविवेके ३८ वाचस्पतिकृतभक्तिप्रकाशे ३९ अद्वैतसिद्धिकारमधुसूदनसरस्वतीकृतभक्तिरसायनभगवद्गीतासप्तमाध्यायव्याख्यानमहिमव्याख्यानेषु ४० लक्ष्मीधरकृतभगवन्नामकौमुद्यां ४१ विद्यानिवासभट्टाचार्यकृतसच्चरितमीमांसायां ४२ विष्णुपुरीकृतभक्तिरत्नावल्यां ४३ काश्मीरदेशीयक्षेमेंद्रप्रकाशे ४४ भास्करराजकृतललितासहस्रनामटीकायां ४५ नीलकंठकृतदेवीभागवतटीकायां ४६ स्वप्नेश्वराचार्यकृतशांडिल्यप्रणीतभक्तिसूत्रभाष्ये च ४७ लक्षशः कोटिशोऽन्यनिबंधेषु च पुराणत्वेनोदाहृतेः। शंकराचार्यपरमगुरुभिर्गौडपादाचार्यैः पंचीकरणव्याख्यायां 'जगृहे पौरुषं रूपमि'ति भागवतमुपन्यस्तमिति परकालादिमठीयैतिह्याच्च हनुमतीचित्सुखीशांकरीश्रीमध्वाचार्यकृतभागवततात्पर्यवल्लभाचार्यकृतसुबोधिनीरामानुजीयवीरराघवीनिंबार्कीयाबोपदेवकृतहरि-लीलामुक्ताफलपरमहंसप्रियाख्यव्याख्यात्रयविद्वत्कामधेनुसंबंधोक्तितत्त्वदीपिकाशुकहृदयासुदर्शनीमुनिभावप्रकाशिकाप्रहर्षिणी श्रीधरश्रीविजयध्वजीयादुपतीश्रीनिवासीसत्यधर्मतीर्थीबृहत्तोषिणीलघुतोषिणीचक्रवर्तिसंदर्भतोषिणीसारमाधवीवामनीएकनाथीपुरुषोतमी-त्यादि ३१ अनंतसंस्कृतव्याख्यानिबंधानां भगवदपरोक्षादिज्ञानिकृतानामेव विद्यमानत्वाच्च तृतीयचतुर्थावपि व्यभिचरितौ। छांदोग्यैतरेयाद्युपनिषत्सु वैष्णवादिपुराणेषु भारतीयाष्टावक्रख्यानसनत्सुजातीयगीतादिभागेषु हरिवंशीयपुष्करप्रादुर्भावे सुंदरकांडे च दृढबंधपदलालित्ययोर्दर्शनात्। प्रत्युत शंकराचार्यसमयादुत्तरे वत्सरशतद्वये व्यतीते बोपदेवोऽभूदिति रामाश्रमनंदमिश्रादिभिरुक्तत्वेन तत्प्राक्कालिकहनुमत्-चित्सुखादीनां भागवतव्याख्याने प्रवृत्तेश्च। उक्तं च सिद्धांतदर्पणकृता 'बोपदेवकृतत्वे च बोपदेवपुराभवैः। कथं टीकाः कृताः संस्युर्हनुमत्चित्सुखादिभिरि'ति। कृष्णस्तु भगवान् स्वयं सितकृष्णकेशावित्यादिभागवतीयपद्येषु परस्परविरुद्धेषु गंगायमुनाजलस्वामिनावित्यादिक्लिष्टव्याख्यानपरपरमहंसप्रियादिनिबंधेषु भागवतीयकथाप्रतिपादकपूर्वापराविरुद्धमुक्ताफलहरिलीलाख्यनिबंधद्वयकर्तुः कविशिरोमणेर्बोपदेवस्य प्रवृत्तेश्च। 'यस्य व्याकरणे वरेण्यघटनाः स्फीताः प्रबंधा दश प्रख्याता नव वैद्यकेऽथ तिथिनिर्धारार्थमेकोऽद्भुतः। साहित्ये त्रय एव भागवततत्त्वोक्तौ त्रयस्तस्य भुव्यंतर्वाणिशिरोमणेरिह गुणाः के के न लोकोत्तराः ॥' इति मुक्ताफलटीकायां हेमाद्रिणा बोपदेवकृतग्रन्थानां परिगणनाच्च। अत एवोक्तं हरिलीलाख्यभागवतव्याख्यायां बोपदेवेन 'श्रीमद्भागवतस्कंधाध्यायार्थादि निरूप्यते। विदुषा बोपदेवेन मंत्रिहेमाद्रितुष्टये ॥ आनंदस्य हरेर्लीलां वक्ता भागवतागम'इत्याद्युक्तं व्याख्यातं च हेमाद्रिणा। भागवतमेवागमो वेदः। 'इतिहासः पुराणं च पंचमो वेद उच्यत इत्युक्तेरित्या'दि। मुक्ताफलपरमहंसप्रियासंज्ञकयोर्भागवतव्याख्यानयोरपि बोपदेवेन तद्व्याख्यानयोर्हेमाद्रिणा च श्रीमद्भागवतस्य महापुराणत्वं स्पष्टमाविष्कृतम्। एते च हरिलीलामुक्ताफलपरमहंसप्रियासंज्ञकास्त्रयो ग्रंथा बोपदेवकृताः श्रीमद्भागवतव्याख्यानभूता हेमाद्रिकृततद्व्याख्याश्च मथुरावृंदावनलाहुरमेणवलीकरहाडादिषूपलब्धाः। किंच हेमाद्रिबोपदेवाभ्यां पुराणमिति कीर्तनात्। तत्प्राचीननिबंधेषु संमतित्वेन लेखनात्। प्रवादो 'बोपदेवीयो वंध्यापुत्रायतेतराम्'। तथाहि। 'आनंदस्य हरेर्लीलां वक्ता भागवताऽऽगम' इति आगमशब्दं वेदपर्यायं प्रायुंक्त बोपदेवः। तथाच व्याख्यातं हेमाद्रिणा। भागवतमेवागमो वेदः इतिहासः पुराणं च पंचमो वेद उच्यत इत्युक्तेरिति। मुक्ताफलव्याख्यायां च 'स्पर्शेच कामं नृपरेतसांभः ये वा परे योगसमीरदीपितज्ञानाग्निनारंधितकर्मकल्मषा'इति भागवतपद्यव्याख्यानाऽवसरे रेतसा रेतसि आर्षो व्यत्ययः सुपामित्याकारो वा। रंधि तेति सापेक्षत्वेऽपि समास आर्षः अलुग्वेति हेमाऽद्रिः। तत्रैव इदं भागवतं नाम यन्मे भागवतोदितमिति भागवतमुपादाय यत् यस्मात् भागवतोक्तं तेन भागवतम्। प्रोक्तार्थेऽणिति व्याचख्यौ हेमाद्रिः। यदि हीदं भागवतं बोपदेवकृतमभविष्यत् तर्हि बोपदेवसमानकालिकः प्रामाणिकशिरोमणिर्हेमाद्रिर्भागवतस्थप्रयोगाणामार्षत्वं भगवता कृतं भागवतमिति व्युत्पत्तिं भागवतमेवागमो वेदः 'इतिहासः पुराणं चे'त्युक्तेरिति नावदिष्यत्। कविशिरोमणिर्बोपदेवोऽपि आर्षान् प्रयोगान् न प्रायोक्ष्यत्। परमहंसप्रियाख्यायां भागवतव्याख्यायां च रेतसेत्यादिसहस्रावधिप्रयोगाणामार्षत्वं च नाऽभ्यधास्यत्। व्रतहेमाद्रौ च भविष्यत्पुराणभागवतयोर्विरोधे कल्पभेदेन व्यवस्थेति वदता हेमाद्रिणाऽपि श्रीमद्भागवतस्य पुराणत्वं व्यक्तीकृतम्। न च हेमाद्रेर्बोपदेवसमानकालिकत्वे किं मानमिति चेत्तदुक्तिभ्यामेवेति गृहाण। तथाहि हरिलीलायां बोपदेवः 'विदुषा बोपदेवेन मंत्रिहेमाद्रितुष्टये। श्रीमद्भागवतस्कंधाध्यायार्थादि निरूप्यते ॥' इति।

मुक्ताफले च बोपदेवः 'विद्वद्धनेशशिष्येण भिषक्केशवसूनुना। हेमाद्रिर्बोपदेवेन मुक्ताफलमचीकरदि'ति। हेमाद्रिश्च देवगिरीश्वरस्य रामचंद्रस्य राज्ञो मंत्री। यद्यपि भूयसा तदर्थत्वेन हेमाद्रितुष्टय इत्युक्तं तथापि योग्यतोपलक्षणपरं बोद्धव्यमिति। हरिलीलापद्यं विद्वद्धनेशशिष्येणेत्यतिरोहितार्थम्। यदुराजमहामंत्रिणा हेमाद्रिणा अभ्यर्थितस्तत्कर्तृकत्वं स्थापितवानिति मुक्ताफलपद्ये च व्याचख्यौ। 'वेदः पुराणं काव्यंच प्रभुर्मित्रं प्रियावचः। बोधयंतीति ह प्राहुस्त्रिवत् भागवतं पुनः॥' इति हरिलीलास्थबोपदेवपद्यम्। ननु पुराणमात्रे प्रकृतोपयुक्ते किमन्ययोः कथनेन तत्राह त्रिवदिति अवततार च हेमाद्रिः। सचाऽयं हेमाद्रिर्द्वादशाधिकद्वादशशत १२१२ शकोद्भवदाक्षिणात्यालंदीग्रामस्थज्ञानेश्वरसंज्ञकभगवद्भक्तकृतगीताव्याख्यानोत्तरकालिको हेमाद्रपंतनाम्ना प्राकृतभाषया प्रसिद्धस्तां ज्ञानेश्वरीं नीतवान्, सा ततोऽन्येन हरिदासेनोद्धृतेति स्पष्टं श्रीमद्विठ्ठलभक्तकृतग्रंथेषु। तथाच तदाश्रिततत्समानकालिकबोपदेवप्राक्कालिकैकादशगते शाके विंशत्यब्दद्वये गते। अवतीर्णं मध्वमुनिं सदा वंदे महागुरुमिति स्मृत्यर्थसागरादिमहानिबंधमहितश्रीमदानंदतीर्थभगवत्पादाचार्यैरन्यैश्च तत्रत्यवचनं तदानीमविद्यमानं ब्रह्मसूत्रभाष्यादौ संमतित्वेनाऽऽलेखि। न च शंकराचार्यैः शारीरकभाष्ये विष्णुपुराणीयवचनोपन्यासवत् श्रीमद्भागवतीयवचनानुपन्यासे किं बीजमितिचेत् त्वत्संमतभागवताऽनुपन्यासे यद्बीजं तदेवेत्यवेहि। केचित्तु शारीरकमीमांसायाः प्रधानतया ज्ञानप्रतिपादकत्वेन श्रीमद्भागवतादेश्च प्रधानतया भक्तिप्रतिपादकत्वेन तयोश्च निर्विण्णाऽनिर्विण्णरूपभिन्नाधिकारिविषयत्वेन भिन्नप्रकरणत्वान्नोदाहृतिः। गीता तु यथा काशीक्षेत्रं वामनपुराणलक्ष्मीसंहितात्रिस्थलीसेतुपर्यालोचनया वैष्णवमिति वैष्णवा वदंति। स्कंदपुराणशिवरहस्यादिपर्यालोचनया शैवमिति शैवा वदन्ति। तथा ज्ञानप्रधानेति ज्ञानवादिनो भक्तिप्रधानेति भक्ता इति तदुदाहृतिरित्याहुः। अत एव श्रीमद्भागवतमुपक्रम्य विष्णुद्वेषात् पौरुषेयं तामसं चेति केचन वदंतीत्यादिपर्वादौ विलिलेख चतुर्धरः।

**इति श्रीमन्नारायणपरायणकृष्णाकूलश्रीकरहाटक्षेत्रवासिवासुदेवाचार्यसुतनारायणाचार्याऽङ्गजगङ्गागर्भजगोपाऽऽचार्यकृते भागवतभूषणे दुर्जनधिकारो नाम द्वितीयोल्लासः॥ २॥**

श्रीकृष्णाय नमः। स्यादेतत्। 'अष्टादशपुराणानि कृत्वा सत्यवतीसुतः। भारताख्यानमखिलं चक्रे तदुपबृंहितम्'इति स्कंदमात्स्याभ्यां 'अष्टादशपुराणानि अष्टौ व्याकरणानि च। ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम्'इति भविष्यत्प्रथमाध्यायस्थवचसा च भारतोत्तरं भागवतं कृतमिति प्रतिपादकं भागवतं विरुद्धमिति चेन्न। आख्यानरहितं चतुर्विंशतिसहस्रसंख्याकं भारतं कृत्वाऽथ भागवतं कृत्वा साख्यानं सकलं भारतं कृतवानित्यर्थेन विरोधाऽभावात्। स्फुटीभविष्यति चैतदुपरिष्टात्। अत एव भारताऽऽख्यानमखिलमित्युक्तिः स्वरसतः संगच्छते। मार्कंडेयपुराणीयादिमाध्याये 'भगवन् भारताख्यानं व्यासेनोक्तं महात्मने'त्याद्युक्त्वा 'तदिदं भारताख्यानं बह्वर्थं बहुविस्तरम्। तत्त्वतो ज्ञातुकामोऽहं भगवंतमुपागतः॥' इत्याद्युक्त्वा जैमिन्युक्तप्रश्नचतुष्टयेन पुराणमुपक्रम्याऽतिमाध्याये जैमिनिरुवाच। 'भारतेनाभवद्यन्मे संदेहस्फोटनं द्विजाः। तद्भवद्भिः कृतं यत्तैः कश्चिन्नान्यः करिष्यती'त्युपसंहृतत्वेन आग्नेयपुराणे 'गीतासारं प्रवक्ष्यामि सर्वगीतोत्तरोत्तरम्। कृष्णो'यमर्जुनायाहे 'त्युपक्रम्य दैवी ह्येषा' गुणमयी मम माया दुरत्यया। 'यस्यां जाग्रति भूतानी'त्यादिगीतोक्तकतिचित्पद्यानां लेखनेन तयोरप्युक्तवचनत्रयविरुद्धत्वेन तद्विरोधस्याऽभियोगानर्हत्वाच्च। 'यश्चोभयोः समो दोषः स उभाभ्यां परिहरणीय इति न्यायात्। वाराहकल्पवृत्तांतमधिकृत्याह पराशरः।' यत्राह धर्मानखिलांस्तद्युक्तं वैष्णवं विदुः। सारस्वतस्य कल्पस्य मध्ये ये स्युर्नराऽमराः॥ तद्वृत्तातोद्भवं लोके तद्भागवतमुच्यते॥' इत्यादिमात्स्यपर्यालोचनया सत्यकल्पवृत्तांताश्रयत्वान्मात्स्यस्य तत्पुरुषवृत्तांताश्रयत्वात् स्कांदस्य अघोरकल्पवृत्तांताश्रयत्वाद्भविष्यस्य सारस्वतकल्पवृत्तांताश्रयत्वात् भागवतस्य तैरिदं विरुद्धमित्युक्तेरप्रयोजकत्वाच्च॥ अत एव निर्णयसिंधौ दशावतारप्रकरणे मध्याह्ने परशुरामः, सायं परशुराम इति प्रतिपादकपुराणयोः कल्पभेदेनैव व्यवस्थोक्ता। एतेनेक्ष्वाकुवंशस्थजिनस्यैव बौद्धत्वप्रतिपादकभागवतस्य बौद्धावतारोक्तौ 'मायामोहं ददौ हरिरि'त्यादिप्रतिपादकविष्णुपुराणेन विरोधोऽपि परिहृतः। शक्तिमनतिक्रम्य इत्यादाविव शेखरोक्तं बौद्धपरावरत्वमादाय परावरयोगि चेति विहितत्वेऽभ्युपगमाच्च॥ सिद्धांतदर्पणे तु 'सर्वाण्येव पुराणानि कथितानि नरर्षभ। द्वादशैव सहस्राणि प्रोक्तानीह महर्षिभिः॥ पुनर्वृद्धिं गतानीह व्याख्यानैर्बहुभिर्नृपे'ति भविष्यप्रथमाध्यायं मनसिकृत्य 'ब्रह्मश्रीपतिसंवादो योंऽशोऽष्टादशमध्यगः। व्यासनारदसंवादस्तत्र यस्मात्प्रवेशितः॥' इति विरोधः परिहृतः। व्याख्यातं च नंदमिश्रैः इदं भागवतं पूर्वं ब्रह्मणे नाभिपंकजे। स्थिताय भवभीताय कारुण्यात्संप्रकाशितमि'ति द्वादशस्कंधवाक्यात् ब्रह्मनारायणसंवादरूपो यो भागवतभागः स भारतात्पूर्वं अष्टादशसु आविर्भावितः। व्यासनारदसंवादरूपस्तस्यैव योऽपरो भागः स तत्र प्रवेशितः। अत एकस्योभयं संभवेत्। तदुक्तं प्रथमे सूतेन 'स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम्। शुकमध्यापयामासे'ति। प्रथमतो ब्रह्मश्रीपतिसंवादरूपां कृत्वा पश्चान्नारदोपदेशादनुक्रम्य विस्तार्य चेत्यर्थः। भारतमपि पूर्वं आख्यानैर्विना चतुर्विंना चतुर्विंशतिसहस्रं कृत्वा ततः तत्सहितपंचाशत्सहस्रं ततस्ततोऽप्यधिकमिति भारते स्पष्टमिति। प्रातरित्वेत्यादिवत् कृत्वेत्यस्यान्येभ्योऽपि दृश्यंत इति विहितकनिबंतत्वाच्च। न च तद्योगे 'कर्तृकर्मणोरि'ति

षष्ठ्यापत्तिः । धायैरामोदमुत्तमं पुष्पंधय इत्यादाविव अनित्यमिदं तदर्हमिति निर्देशादिति मनोरमोक्तथा व्यत्ययेन वा तदप्रवृत्तेः । ननु मात्स्ये 'पंचागानि पुराणानी'त्युक्तेः पुराणांतरकोशयोश्च सर्गश्च प्रतिसर्गश्च वंशो'मन्वंतराणि च । वंशानुचरितं चैव पुराणं पंचलक्षणमि'त्युक्तेर्नेदं महापुराणम्, अस्य दशलक्षणत्वादिति चेन्न । दशलक्षणांतःपातिनां 'पोषणं विष्णुभक्तिश्च निरोधो मुक्तिराश्रयः॥' इत्युक्तानां पंचानां लक्षणानां पाद्मादिषु सत्त्वेन तेषामपि महापुराणत्वाभावप्रसंगात् । अथ पंचलक्षणमित्यनेन न्यूनव्यावृत्तिरेव । स्पष्टा चेयं रीतिर्व्यवहारमिताक्षरायां 'षड्विधं स्त्रीधनं स्मृतमि'ति मनुवचनव्याख्यानावसरे इति ब्रूषे तर्हि सिद्धं नः समीहितमिति दिक् । नच ग्रंथोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः' इत्युक्ते वैष्णवभागवतं न महापुराणम् । तस्याऽष्टादशसहस्रसंख्याकत्वाभावादिति वाच्यम् । देवीभागवतस्याऽपि किंचिदधिकषोडशसहस्रसंख्याकत्वात् । विजयध्वजीयपाठानुसारेण तस्य तत्संख्याकत्वाच्च । श्रीधरीयपाठानुसरणेपि शौनक उवाच सूत उवाच इति श्रीत्यादिगद्यगणनेन तत्संख्यापूर्तेः शिष्टैर्ब्रह्मावर्तीयादिभिरूररीकृतत्वाच्च । न च विजयध्वजीयपाठश्रीधरीयपाठयोर्मध्ये कः प्रामाणिकः पाठ इति चेत् । तैत्तिरीयनारायणोपनिषद आंध्रद्रविडयोः पाठभेदे कः प्रामाणिकः पाठः । अथ विद्यारण्यभाष्यानुयायी सांप्रदायिकः पाठ इति वाच्यं, तैरपि तद्भाष्ये यद्यपि आंध्रद्रविडयोरत्र महान् पाठभेदः शिष्टपरिगृहीतत्वाच्चोभयमपि प्रामाणिकं, तथापि द्रविडपाठानुसारेण व्याख्यास्याम इत्युक्तत्वेनोभयविधपाठस्याऽपि तत्संमतत्वात् तद्वदत्राप्यवेहि । स्पष्टा चेयं रीतिः 'कडारादेका संज्ञा' इतिसूत्रे महाभाष्ये । तत्र हि किमाकडारादेका संज्ञेति आहोस्वित् प्राक्कडारात्परं कार्यमिति उभयथाप्याचार्येण सूत्रं प्रतिपाठिताः । केचिदाकडारादेकासंज्ञेति केचित्प्राक्कडारात्परं कार्यमितित्युक्तम् । प्रकृतमनुसरामः । 'ग्रंथोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः । पंचत्रिंशोत्तराध्यायत्रिशतीयुक्त ईश्वरीति काशीमथुराझाशीपुण्यग्रामादावुपलभ्यमाने गौरीतंत्रे च स्पष्टमुक्तत्वाच्च । देवीभागवते च द्वात्रिंशत्त्रिशताध्यायानामेवोपलब्धेर्न तन्महापुराणम् । तन्न तदनुयायिनो द्वात्रिंशत्त्रिशतं पूर्णमिति पाठं कल्पयंति ते भ्रांताः । 'तत्र श्रीदशमः श्रेष्ठस्तत्र गोकुलकेलयः । तत्रैव श्रीरासलीला गोपिकागीतिका ततः ॥' इत्यग्रिमगौरीतंत्रीयोक्तिविरोधात् । गोपीगीतस्य देवीभागवतेऽनुपलंभात् । एवमुक्तसमाधीनामनंगीकारे पुराणानां सप्तदशत्वापत्तिः । न च देवीभागवतं गृहीत्वाऽष्टादशत्वोपपत्तिरिति वाच्यं, तत्राऽपि तृतीयस्कंधे 'वेदशास्त्राः पुराणानि वेदांतं भारतं तथा । कृत्वा संमोहसंमूढोऽभवं राजन्मनस्यपी'त्यादिना भारतोत्तरं संमूढो व्यासो देवीमाहात्म्यं ज्ञातवानित्युक्त्या देवीभागवतस्याऽपि भारतोत्तरत्वप्रतीतेः । प्रत्युत देवीभागवतस्य माहापुराणत्वे स्कांदीयेश्वरसंहितायां 'चतुर्भिर्भगवान्विष्णुरि'त्युक्त्वा तानि च 'भागवतपाद्मगारुडवामनानी'त्युक्तम् । तथा पाद्मे 'सात्त्विको वैष्णवो धर्म' इत्युपक्रम्य 'वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥ सात्विकानि पुराणानि विज्ञेयानि शुभानि चे'त्युक्तं तथा विष्णुभागवतसप्ताहमुपक्रम्य 'दशसप्तपुराणानि षट् शास्त्राणि समाययुरि'ति पाद्मं तथा भागवतमाहात्म्यमुपक्रम्य दशसप्तपुरा० परामिति पाद्मम् । तथा स्कांदे 'प्रभासखंडे चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुराणेषु शेषेषु भगवान् भव'इत्युक्तम् ।

तथा स्कांदे सौरसंहितायां 'कथ्यते दशभिर्विप्राः पुराणैः परमेश्वरः । चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः ॥ इत्युक्तं च विरुध्येत । देवीभागवते प्राधान्येन देवीमाहात्म्यप्रतिपादनात् । उक्तवचनेषु च प्राधान्येन देवीप्रतिपादकस्य महापुराणत्वाभावकथनात् । ननु यत्राऽधिकृत्य गायत्रीमिति मात्स्योक्तभागवतलक्षणस्य गायत्र्या च समारंभ इति स्कांदोक्तभागवतलक्षणस्य च 'सर्वचैतन्यरूपां तां विद्यामाद्यां च धीमहि । बुद्धिं या नः प्रचोदयादि'ति देवीभागवतप्रारंभश्लोके स्वरसत उपपद्यमानत्वात् न विष्णुभागवतं महापुराणम् । न च गायत्रीसमानार्थत्वाद्विष्णुभागवतस्य तदुपपत्तिरिति वाच्यम् । गायत्रीप्रतिपाद्यब्रह्मणोऽष्टादशस्वपि सुलभतयाऽसाधारणलक्षणस्याऽभावात् इति चेन्न । 'यत्राऽधिकृत्य शकुनीन् धर्माधर्मविचारणम् । यत्राधिकृत्यमाहात्म्यमादित्यस्य चतुर्मुखः ॥ यदा च गारुडे कल्पे विश्वांडं गरुडोद्भवम् । अधिकृत्याऽब्रवीत्कृष्णो गारुडं तदिहोच्यते ॥ इत्यादिमात्स्यीयपूर्वापरवचनप्रायपाठैकत्वाय 'गायत्रीभाष्यरूपोऽसौ' इति गारुडगौतमीतंत्रैकवाक्यतया च 'अथवा हवनं कुर्यात् गायत्र्या सुसमाहितः । तन्मयत्वात्पुराणस्य परमस्यास्य तत्त्वतः ॥' इति विष्णुभागवतसप्ताहविधिस्थपाद्मेन च 'यत्राधिकृत्य गायत्रीमि'त्यादेश्छंदःपरत्वाभावात् । उत्तरोत्तरानुवृत्तया स्वार्थबोधकत्वरूपाधिकारलक्षणस्यार्थ एव संभवाच्च । 'अथ शब्दाऽनुशासनं' 'अथ योगाऽनुशासनमि'त्यादौ आसमाप्तेः शब्दस्य योगस्य च विचारवत् गायत्र्यर्थाऽधिकारस्याऽन्यत्राऽनुपलभ्यमानत्वादत्रैवोपलभ्यमानत्वात् लक्ष्यतावच्छेदकसमनियतत्वरूपाऽसाधारणधर्मस्य विद्यमानत्वात् । 'गायत्र्यर्थश्च विष्णुध्यानमि'त्याग्नेये गायत्र्यर्थाऽध्याये निरूपितम् । विष्णुसंज्ञमिति श्रुतिः काचित् वरेण्यं सवितुर्भर्गं विष्णवभिधं जगौ । ततश्चाविष्णुरेवार्थो गायत्र्या' इति शिवतत्त्वविवेके स्पष्टम् । 'हिरण्यगर्भं पुरुषं व्योम्नि तद्विष्णुसंज्ञितमि'त्यादिना बृहद्योगियाज्ञवल्क्येनाऽपि विष्णुपरत्वं गायत्र्या उक्तम् । एतदेकवाक्यतया यन्मैत्रायणीयश्रुतौ गायत्र्यर्थप्रकरणे 'अक्षिणीवैष' इत्यारभ्य 'भर्गो रुद्र'इत्युक्तं तत्रापि 'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । इति ब्रह्मांडात् अक्षिद्वित्वलिंगेन च 'रुद्रोमाविशांतक इत्यादाविव द्युभ्वाधिकरणन्यायेन हरिरेव । एतेनैव सवितादेवतेति श्रुतिः गायत्रीदेवतेति भरद्वाजस्मृतिः शिवोदेवतेति आदित्यकौर्मादिपुराणं त्रिपुरसुंदरीदेवतेति सुंदरीतापिनी च व्याख्याता । सवित्रादिशब्दानाम् अनुमानिकाऽधिकरणीय'सूक्ष्मंतु तदर्हत्वात् तदधीनत्वादर्थवदि'ति गुणसूत्रन्यायेन विष्णुपरत्वात् ।

विष्णुसंज्ञमितिवत् सवितृसंज्ञमित्यनुक्तत्वात्। 'सारस्वतस्य कल्पस्य वृत्तांतो यत्र वर्ण्यते। गायत्रीछंदसारं भस्तद्भागवतमुच्यते ।।' इति दिनकरलिखितवचनं तु निमूर्लमेव। समूलत्वेऽपि गायत्रीमंत्रार्थेनेत्यर्थः। छंदःशब्दस्य 'बहुलं छंदसी'त्यादिवद्वेदपरत्वात्। ननु हयग्रीवब्रह्मविद्येति भागवतलक्षणं देवीभागवतस्यैव तत्रैव प्रथमस्कंधे हयग्रीवनामकदैत्येनोपासितब्रह्मप्रतिपादकविद्यायाः स्त्रीदैवत्यमंत्रस्य 'जपन्नेकाक्षरं मंत्रं मायाबीजात्मकं ममेत्यादिनोक्तेरि'ति चेन्न। विष्णुभागवत एव पंचमस्कंधे 'ओंनमो भगवते धर्माये'त्यादिना हयग्रीवविद्यायाः स्फुटत्वात्। निषादस्थपत्यधिकरणन्यायेन रथकाराऽधिकरणन्यायेन च वचनस्वारस्येन च हयग्रीवरूपब्रह्मविद्येत्येव तदर्थात्। त्वद्रीत्या षष्ठस्कंधीयनारायणवर्मणोऽपि हयग्रीवब्रह्मविद्यात्वात्। 'यद्वा अश्वशिरो नाम तयोरमरतां व्यधादि'ति तत्रैवोक्तेः। 'अश्वशिरसा प्रोक्तत्वादश्वशिरः' इत्यादि श्रीधरीये स्पष्टम्। ननु शारदातिलकादिषु 'मंत्राः पुंदेवताः प्रोक्ता विद्याः स्त्रीदेवताः पुनरि'त्युक्तत्वात्स्त्रीदैवत्यमंत्रेष्वेव विद्यापदप्रयोग इति हयग्रीवब्रह्मविद्येत्यत्र देवीभागतस्यैव विद्या ग्राह्येति वाच्यम्। तस्य वचनस्य तांत्रिकमंत्रविद्याविषयत्वात्। अन्यथा 'जपन्नेकाक्षरं मंत्रं मायाबीजात्मकं ममे'ति देवीभागवते मंत्रपदप्रयोगस्य 'विद्यां धारयतो भवेत्, द्वादशाक्षरविद्यया, इमां विद्यां पुरा कश्चित् वैष्णव्या विद्यया विभुरि'त्यादौ विष्णुभागवते द्वादशाक्षरविद्यायामिति पाद्मे कार्तिकमाहात्म्ये वैष्णवमंत्रेषु विद्यापदप्रयोगस्य चाऽसंगत्यापत्तेः। ननु देवीभागवते देवीकृतवृत्रासुरवधस्योपवर्णनात् 'वृत्रासुरवधोपेतमि'ति लक्षणं तत्राऽतिव्याप्तमिति चेन्न। 'वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा' इति ऋग्वेदवाजसनेययोः 'इंद्रो वृत्रमँत्वेहति तैत्तिरीये' 'इंद्रो वै वृत्रं हत्वा महानभवदि'ति ऐतरेयारण्यके च प्रसिद्धस्येंद्रकृतवृत्रवधस्यैव वृत्रासुरवधोपेतमित्यत्र ग्रहणात्। स्पष्टा चेयं रीतिः प्रथमस्य द्वितीये पादे गुहाधिकरणे ब्रह्मसूत्रभाष्ये जीवब्रह्मणोरुभयोर्गुहाप्रविष्टत्वेपि 'यो वेद निहितं गुहायामि'त्यादौ प्रसिद्धगुहाप्रविष्टत्वं विष्णोरेवेत्यर्थिकेति दिक्। ननु 'सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः तद्वृत्तांतोद्भवं तच्च पुराणं परिकीर्तितमि'ति मात्स्ये भागवतस्य सारस्वतकल्पीयत्वकथनान्मुख्यत्वेन सरस्वत्या आविर्भावप्रतिपादकं देवीभागवतमेव ग्राह्यं न विष्णुभागवतम्। तत्र मुख्यत्वेन सरस्वत्या आविर्भावस्याऽसत्त्वादिति चेन्न। अघोरकल्पवृत्तांतबोधके भविष्ये 'यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः। अघोरकल्पवृत्तांतप्रसंगेने'त्यादिना मात्स्येनादित्यमाहात्म्यप्रतिपादनस्य बोधनात्। लक्ष्मीकल्पवृत्तीयबोधके कौर्मे प्राधान्येन शिवमाहात्म्यस्यैव प्रतिपादनाच्च। मात्स्ये 'प्रथमः श्वेतकल्पस्तु' इत्यारभ्य 'व्यान एकादशः प्रोक्तस्तथा सारस्वतः परः। त्रयोदश उदानस्तु गारुडोऽथ चतुर्दश इत्याद्युक्त्वा 'संकीर्णास्तामसाश्चैव राजसाः सात्विकास्तथा। रजस्तमोमयास्तत् द्वत्रयस्त्रय उदाहृताः ।। संकीर्णेषु सरस्वत्याः पितॄणां व्युष्टिरुच्यते। अग्नेः शिवस्य माहात्म्यं तामसेषूपवर्ण्यते।। सात्त्विके अधिकं तद्वद्विष्णोर्माहात्म्यमुच्यते। इत्युक्तत्वेन द्वादशस्य सारस्वतस्य सात्विकत्वेन विष्णुमाहात्म्यप्रतिपादकत्वस्य स्पष्टमभिधानाच्च। तस्मात्सरस्वत्याः कल्पादौ प्रादुर्भावमाहात्म्यमूलकैव सारस्वतकल्प इति प्रसिद्धिः। 'आदावेवाह्निमाहात्म्यं यस्मिन्यस्य विधीयते। तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरे'ति मात्स्यात्। वल्लभीयोदाहृतबृहद्वामनपुराणे भृगुब्रह्मसंवादे 'कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ। पृथिव्यां भारते क्षेत्रे माथुरे मम मंडले।। वृंदावने भविष्यामि प्रेयान्वो रासमंडले। जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकमि'ति श्रुतीः प्रति भगवदुक्तत्वेन वेदात्मकसरस्वतीरूपगोपिकानां प्रादुर्भावो यत्र स सारस्वतः कल्प इति वक्तुं शक्यत्वाच्च। न च विष्णुभागवते 'पाद्मं कल्पमथो शृणु' इति द्वितीयस्कंधे उक्तत्वेन न तत्सारस्वतकल्पीयवृत्तांतबोधकमिति वाच्यम्। 'अयं तु ब्रह्मणः कल्प'इत्यारभ्य वराहावतारवर्णनपर्यंतं ब्राह्मपाद्मवाराहकल्पीयवृत्तांतं समाप्य ततः समाप्तिपर्यंतं सारस्वतकल्पीयवृत्तांतस्योक्तत्वात्। बृहद्वामनपुराणीयसारस्वतकल्पीयरासक्रीडाया सारस्वतेतरकल्पीयवृत्तांतबोधकेषु सप्तदशपुराणांतरेषु वर्णनस्य वक्तुमशक्यत्वेन सारस्वतस्य कल्पस्येत्यादिपूर्वोक्तमात्स्यपर्यालोचनयाऽत्रैव तस्याः प्रवेशनीयत्वात्। अतिविस्तृतस्याऽपि कृष्णचरित्रस्य लक्षणघटकत्वं तु न संभवति। कृष्णजन्मखंडादौ व्यभिचारात्। प्रकृतिखंडादौ व्यभिचरितातिविस्तृतदेवीचरित्रवत्। ननु शिवपुराणे उत्तरखंडे मध्यमेश्वरमाहात्म्ये अष्टादशपुराणनामनिर्वचनप्रकरणे 'भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते। तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम्।।' इत्युक्तिर्देवीभागवतस्यैव महापुराणत्वं वदतीति चेन्न। 'विष्णोर्माया भगवती यया संमोहितं जगत्।' 'इत्युपक्रम्य दुर्गेति भद्रकाली'ति इत्यादिना दुर्गाचरितस्य विष्णुभागवते दशमस्कंधे उक्तत्वेनादोषात्। व्यंजितश्चायमर्थो भागवतोक्तभगवतीदुर्गापदग्रहणेन। अत एव पूर्वोक्तपाद्मगारुडादिवचसां संगतिः। 'शैवमादिपुराणं च देवीभागवतं तथे'ति पाद्मात्। 'नवरात्रे तु देवेशि दौर्गं भागवतं पठेदि'ति दुर्गातरंगिणीधृतयामलात् देवीभागवतं पठेद्युक्त्या समाहित इति महेशठक्कुरधृतदेवीयामलाच्च देवीभागवतस्य सप्रमाणत्वेऽपि महापुराणत्वे मानाभावः। केचित्तु देवीभागवतस्य हेमाद्रिमाधवादिमहानिबंधेष्वनुदाहृतत्वात् उक्तवचनेषु भागवतपदस्य देवीपुराणपरत्वं वर्णयंतो देवीभागवतं निर्मूलमित्याहुः। अन्ये तु नारदपंचरात्रे पंचत्रिंशत्तमपटले 'पारायणक्रमं कृत्वा नवभिर्वक्ष्यमाणतः। स्वाध्यायाध्ययनानंदसर्वमंगलकारिणः। संसेव्याः सर्वथा सद्भिर्वासराः शारदा यतः।।' इत्यादिना नवरात्रोत्सवस्य वैष्णवत्वकथनात् तत्र विष्णुभागवतपारायणस्यैव विधायकानीमानि वचांसि। सौभाग्यकल्पलतोदाहृताभ्यां 'इदं रहस्यं चरितं राधोपासनमुत्तमम्। व्यासाय मम भक्ताय प्रोक्तं पूर्वं मया द्विजे।। मत्तो रहस्यं ज्ञात्वैवं राधामाहात्म्यमुत्तमम्। एतस्य विस्तरं चक्रे श्रीमद्भागवते तथा।। नारदे ब्रह्मवैवर्ते लोकानां हितकाम्यये'ति संहारभैरवतंत्रे 'श्रीमद्भागवतं नाम पुराणं वेदसंमितम्। पारीक्षितायोपदिष्टं सत्यवत्यंगजन्मना।।

यत्र देऽव्यवताराश्च बहवः प्रतिपादिताः ॥' इति देवीयामलतंत्राभ्यां राधाप्रभृतिगोपीमाहात्म्यप्रतिपादकविष्णुभागवतस्यैव देवीभागवतपदवाच्यत्वम् । अत एव वाल्मीकीयरामायणे 'आदिकाव्यमिदं कृत्स्नं सीतामाहात्म्यमुत्तमम् ।' इत्युक्तम् । पुराणादिप्रतिपाद्योपास्योपासकयोरन्यतरेण व्यपदेश इति तदाशयः । एतेनोभयोर्देवीभागवतविष्णुभागवतयोः पुराणमतभेदेनोपपुराणत्वं महापुराणत्वं चेति देवीभागवतटीकोक्तिः परास्तेत्याहुः । 'तत्र भागवतं पुण्यं पंचमं वेदसंमितमि'ति देवीभागवतवाक्ये तु भागवतपदेन विष्णुभागवतमेवोच्यते । मात्स्यादिक्रमस्य तत्राऽनुवादात् । मात्स्यादौ च विष्णुभागवतस्यैव निश्चितत्वात् । देवीभागवतीयगणनायां चतुर्थत्वेन भागवतगणनात् । न च 'लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । प्रौष्ठपद्यां पौर्णमास्यां स याति परमां गतिमिति मात्स्योक्तेर्देवीपुराणं देवीभागवतं वा महापुराणमिति चेन्न । ब्राह्मपाद्मवैष्णववाराहभागवतानां क्रमेण वैशाखीज्येष्ठीआषाढीश्रावणीभाद्रपदीषु दानस्योक्तत्वेनादोषात् । अन्यथा ब्राह्मपाद्मादिष्वपि पौर्णमासीग्रहणे बीजं वद । हेमसिंहेत्यस्य हेमसिंहासनस्थितमित्यर्थः । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य'इति वार्तिकेन आसनपदस्य लोपात् । श्नुनायोगे सत्या भामा भीमइतिवत् । 'अष्टादशपलैः कुर्याद्धेमसिंहासनं प्रिये' इति गौरीतंत्रात् अत एव 'हेमसिंहयुतं चैतद्वैष्णवाय ददाति यः । कृष्णेन सह सायुज्यं स पुमाँल्लभते ध्रुवमि'ति पाद्मं संगच्छते । अन्यथा शाक्ताय देवीसायुज्यमित्यवक्ष्यत् । शैवलैंगादौ शिवरात्र्यादिकालस्य नंद्यादिवाहनस्यादर्शनाच्च । 'प्रणम्य च शिवां देवीं शर्वं भागवतं तथा । पुराणं संप्रवक्ष्यामि' इति देवीपुराणे । 'यदिदं कालिकाख्यं च मूलं भागवतं स्मृतमि'ति कालिकापुराणे । 'ततो भागवतं प्रोक्तं भागद्वयसमन्वितम् । ददाति सूर्यभक्ताय यस्तु भागवतं द्विजाः ॥' इति सौरपुराणे चोक्तम् । तत्र भागवतपदं तत्तत्पुराणविशेषणं यौगिकमेव । त्रयाणामप्युपपुराणेष्वेव मात्स्यादौ गणनात् । तेषां मात्स्यगौरीतंत्रपाद्माद्युक्तभागवतलक्षणानाक्रांतत्वाच्च । अतो भागवतं नामान्यदिति नाशंकनीयमिति श्रीधरोक्तेः कालिकापुराणदेवीपुराणदेवीभागवतविष्णुभागवतानां भागवतपदाभिधेयानां मध्ये महापुराणं विष्णुभागवतमेव नान्यत् कालिकापुराणाद्याशंकनीयम् । अतो यत्राधिकृत्येत्यादिमात्स्याद्युक्तलक्षणस्य विष्णुभागवत एवोपलभ्यमानत्वादित्यर्थ इति न दोषः । ननु भारते मोक्षधर्मे भीष्मेण युधिष्ठिरं प्रति धर्मोपदेशप्रस्तावे शुकमुक्तिरुक्तेति कुत एव परीक्षित्पर्यंतं शुकानुवृत्तिरिति चेदत्र केचित् । नवमस्कंधे एकविंशेऽध्याये 'स कृत्व्यां शुककन्यायामि'ति श्लोकव्याख्यायां यद्यपि शुक उत्पत्त्यैव विमुक्तसंगो निर्वृतः, तथापि विरहातुरं व्यासमनुयातं दृष्ट्वा छायाशुकं निर्माय गतवान् । तदभिप्रायेणैव गार्हस्थ्यादिव्यवहार इत्युक्तम् । स च व्यवहारो हरिवंशे स्पष्टः । 'पराशरकुलोत्पन्नः शुको नाम महायशाः । व्यासादरण्यां संभूतो विधूमोऽग्निरिवोज्ज्वलन् ॥ स तस्यां पितृकन्यायां वीरिण्यां जनयिष्यति । कृष्णं गौरप्रभं शंभुं तथा भूरिश्रुतं जयम् । कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् । ब्रह्मदत्तस्य जननीं महिषीमणुहस्य चे'त्यादिना । भारतेपि 'छायां स्वपुत्रसदृशीं सर्वतोनपगां सदा । द्रक्ष्यसे त्वंच लोकेऽस्मिन् मत्प्रसादान्महामुने' इति । विष्णुपुराणादौ च प्रसिद्धोऽयम् । तथाच तस्य छायाशुकस्यैव वक्तृत्वांगीकारान्न कश्चिद्दोष इति वदंति । अन्ये तु तत्र मुक्तपदं जीवन्मुक्तपरम् । भागवतवक्तुः शुकस्यैव 'यं प्रव्रजंतमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहावे'ति प्रथमस्कंधे वर्णनात् । परिक्षिच्छुकसंवादोत्तरं त्रिंशद्वर्षाऽधिकशतद्वयवर्षीयनारदसनत्कुमारसप्ताहोत्सवे 'परिभ्रमन् समायातः शुको योगेश्वरस्तदा । तत्रायया षोडशवार्षिकस्तदा प्रेम्णा पठन् भागवतं शनैः शनैरि'ति पाद्मे 'योगेश्वरः षोडशवार्षिकः भागवतं पठन्' इत्यादि विशेषणविशिष्टस्यैव शुकस्यागमनवर्णनाच्च । अंशिनं रुद्रं विहायांशस्य शुकस्य मुक्तेः सर्वप्रमाणविरुद्धत्वाच्च । तथाच तस्यैव भागवतवक्तृत्वमिति वदंति । ननु ज्योतिःशास्त्रे गोलाकारत्वं पृथिव्या उक्तम्, अत्र तु पंचमस्कंधे तद्विपरीतमुक्तमिति तद्विरुद्धमिदमिति चेत् सत्यम् । भागवतटीकायां विजयध्वजीयायां तात्पर्येच ५-१६ 'यथा भागवते तूक्तं भौवनं कोशलक्षणम् । तस्याविरोधतो योज्यं सर्वं ग्रंथांतरस्थितम् ॥ अंडोदे पूरणं चैव व्यत्यासः क्षीरसागरे ॥ राहुसोमरवीणां च मंडलाद् द्विगुणोक्तिताम् । विनैव सर्वमुन्नेयं योजनाभेदतोऽत्र तु ॥' इति वचनात् ज्यौतिषाद्युक्तव्यवस्था न सतीत्युक्तेस्तद्विरोधस्याऽकिंचित्करत्वात् । युक्तं चैतत् । योगशास्त्रे पतंजलिना योगजप्रत्यक्षेण पौराणमानकभौवनकोशप्रत्यक्षोक्तेः । गणितानुमानस्य प्रत्यक्षतो दुर्बलत्वात् । पुराणानां वस्तुस्थितिप्रतिपादनार्थं प्रवृत्तत्वाच्च । भूगोलमुपक्रम्य एतदेवाखिलमहं मानतो लक्षणतश्च सर्वं विजिज्ञास्यामि इति राज्ञा पृष्टेन शुकेन भूगोलादिवर्णनोत्तरं 'भूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागगलोकसंस्था । गीता मया नृप तवाद्भुतमीश्वरस्य स्थूलं वपुः सकलजीवनिकायधामे'ति पंचमस्कंधे उक्तेः । तस्मादिदं कालविधानशास्त्रमिति वेदाङ्गज्यौतिषपर्यालोचनया ज्योतिःशास्त्रस्य कालज्ञानार्थं प्रवृत्तत्वेन तत्सौकर्यानुरोधेन तत्र पदार्थाकाराणां कल्पितत्वात् । अत एव सिद्धांतशिरोमणौ 'मूर्तो धर्ता चेद्धरित्र्यास्ततोन्यस्तस्याप्यन्योस्यैवमत्रानवस्था । अंत्ये कल्प्या चेत्स्वशक्तिः किमाद्ये किं नो भूमिः साष्टमूर्तेश्चमूर्तिः ।' इतिवेदादिसिद्धशेषकूर्माद्यभाव उक्तः । यथा व्याकरणशास्त्रे घातको घटः पट इत्यादि सिद्ध्यर्थं कुत्ववृद्धितत्वसुप्रत्ययादयः कल्पितास्तद्वत् । तदुक्तं हरिणा । यद्यपि पदेन वर्णा विद्यंते वर्णेष्ववयवा नच । वाक्ये पदानामत्यंतं प्रविवेको न कश्चन । तथापि उपायाः शिक्षमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते । उपेयप्रतिपत्त्यर्थमुपाया अव्यवस्थिता इति । उपेयस्य घातकादेः कालज्ञानस्य च प्रतिपत्त्यर्थं ज्ञानार्थं उपायाः कुत्वतत्वादयोगोलाकारापृथिवीत्यादयोऽव्यवस्थिताः अनियताः अवास्तविकाश्च । अतएव केचन वैयाकरणाः सुप्रत्ययमपरे सि प्रत्ययमाहुः । ज्योतिर्विदोऽपि केचन सूर्यादिभ्रमणमपरे पृथ्वीभ्रमणमाहुः । तथा चंद्रः स्त्री

बुधो नपुंसकः राहुस्तु पृथ्वीछायैव उपग्रहो वेत्याद्याहुः। प्रकारांतरैरपि विरोधपरिहारस्य मथुराक्षेत्रांतिककाम्यकवनीयग्रंथेषु चतुर्धरकृतभीष्मपर्वटीकायां शंकरभट्टकृतव्यासाविरोधग्रंथे 'अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेदि' ति वाराहे च दृष्टत्वाच्च। अस्य विरोधस्य पुराणांतरेऽपि सत्त्वेन पर्यनुयोगानर्हत्वाच्च। एवमन्येऽपि विरोधाभासाः श्रीमदाचार्यकृतभागवततात्पर्यबोपदेवकृतपरमहंसप्रियावृंदावनीयसंदर्भवल्लभाचार्यीयटीकादिपर्यालचनया परिहर्तव्याः।

इति श्रीनारायणश्रीकरहाटक्षेत्रवासिवासुदेवाचार्यसुतनारायणाचार्यांगजगंगागर्भजगोपालाचार्यविरचिते भागवतभूषणे क्षुद्रोपद्रवनिवारणं नाम तृतीयोल्लासः।

श्रीकृष्णाय नमः। अथैतस्य श्रीमद्भागवतस्य श्रवणादिविधानं तच्चतुर्विधं निर्गुणं सात्त्विकं राजसं तामसं चेति। तदुक्तं स्कांदे भागवतमाहात्म्ये "वर्षमासदिनानां तु विमुच्य नियमाग्रहम्। प्रेमास्वादसुविस्तारं सेवनं निर्गुणं मतम्। पारीक्षितेऽपि संवादे निर्गुणं तत्प्रकीर्तितम्॥ तत्र सप्तदिनाख्यानं तदायुर्दिनसंख्यया। अन्यत्र त्रिगुणं चापि निर्गुणं तु यथेच्छया॥ मासेन ऋतुना वापि श्रवणास्वादसंयुतम्। सात्त्विकं यदनालस्यं समस्तानंदवर्धनम्॥ सप्ताहं यज्ञवद्यत्तु सश्रमं सत्वरं मुदा। सेवितं राजसं तत्तु बहुपूजादिशोभनम्॥ तामसं यत्तु वर्षेण सालसं श्रद्धया युतम्। विस्मृतिस्मृतिसंयुक्तं सेवनं तच्च सौख्यदम्॥ पाद्मे तु 'दिनानां नियमो नाऽस्ति सर्वदा श्रवणं मतमि'ति निर्गुणं श्रवणमुपक्रम्य 'सत्येन ब्रह्मचर्येण सर्वदा श्रवणं मतम्। अशक्यत्वात्कलौ बोध्यो विशेषोऽत्र शुकाज्ञया॥ मनोवृत्तिजयश्चैव नियमाचरणं तथा। दीक्षां कर्तुमशक्यत्वात्सप्ताहश्रवणं मतम्॥ मनसश्चाजयाद्रोगात् पुंसां चैवायुषः क्षयात्। कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतमि"ति तदनुकल्पः सप्ताह उक्तः। तस्य च कृतभूरिपरिश्रमेण श्रमाभाववानधिकारी। तथाच सप्ताहो द्विविधः। निर्गुणो राजसश्च कृतभूरिपरिश्रमकृतः श्रमाभावान्निर्गुणः। भागवतेऽकृतपरिश्रमकृतः श्रमसद्भावाद्राजसः। एवमेव मासेन ऋतुना वा कृतश्रवणस्य निर्गुणत्वं सात्त्विकत्वं च ज्ञेयम्। अत एव 'श्रद्धातः श्रवणे नित्यं माघे तावद्धि यत्फलम्। तत्फलं शुकदेवेन सप्ताहश्रवणे कृतमि'ति पाद्मे निर्गुणसप्ताहोपमानता माघमासीयश्रवणस्योक्ता संगच्छते। अथ देवः द्वादशस्कंधे 'पुष्करे मथुरायां च द्वारवत्यां यतात्मवानि'ति। विधानमालायां 'शिवालये गृहे चैव देवतासदने तथा। वृंदावने नदीतीरे तथा चैव गृहे शुभे॥ पुराणं शृणुयाद्भक्त्या यथोक्तविधिना गृही'ति। अथ कालः। स्कांदे भागवतमाहात्म्ये स्नातो नित्यक्रियाः कृत्वा प्राश्य पादोदकं हरेः। पुस्तकं च गुरूंश्चाऽपि पूजयित्वोपचारतः॥ ब्रूयाद्वा शृणुयाद्वाऽपि श्रीमद्भागवतं मुदा।' प्रथमस्कंधेऽपि 'प्रातर्हुतहुताग्नय' इति। दक्षस्मृतौ 'इतिहासपुराणाभ्यामहःशेषं नयेत्सुधीरि'त्यष्टधा विभक्तदिवससप्तमाष्टमभागौ उक्तौ। पाद्मे तु 'सदा सेव्या सदा सेव्या श्रीमद्भागवती कथे'ति सर्वोपि काल उक्तः अथ श्रोतृलक्षणम्। स्कांदे 'प्रवराअवराश्चेति श्रोतारो द्विविधा मताः। प्रवराश्चातको हंसः शुको मीनादयस्तथा॥ अवरा वृकभूरुंडवृषोष्ट्राद्याः प्रकीर्तिताः। अखिलोपेक्षया यस्तु कृष्णशास्त्रकथाश्रुतौ। स चातको० (१) हंसः स्यात्सारमादत्ते यः श्रोता विविधात् श्रुतात् (२) शुकः सुष्ठु मितं वक्ति व्यासं श्रोतॄंश्च हर्षयन् (३) शब्देनाऽनिमिषो जातु करोत्यास्वादयन् रसम्। श्रोता स्निग्धो भवेन्मीनः० (४) यः स्तुवन् रसिकान् श्रोतॄन् विरौत्यज्ञो वृको हि सः (५) भूरंडः शिक्षयेदन्यान् श्रुत्वा न स्वयमाचरेत्। (६) सर्वं श्रुतमुपादत्ते साराऽसारांधधीर्वृषः (७) स उष्ट्रो मधुरं मुंचन् विपरीते रमेत यः (८) अन्येऽपि बहवो भेदा द्वयोर्भृंगखरादयः। यः स्थित्वाऽभिमुखं प्रणम्य विधिवत् त्यक्तान्यवादो हरेर्लीलाः श्रोतुमभीक्षतेऽतिनिपुणो नम्रो विनीतांजलिः। शिष्यो विश्वसिताऽनुचिंतनपरः प्रश्नेऽनुरक्तः शुचिर्नित्यं कृष्णजनप्रियो निगदितः श्रोता स वै वक्तृभिः।' गौरीतंत्रे 'हेतुवादरतो मूर्खः स्त्रीजितः कृपणः शठः। अहंयुः क्रोधनोऽसाधुः श्रोता न स्याद्वरानने॥ अथ वक्तृलक्षणं स्कांदे। भगवन्मतिरनपेक्षः सुहृदो दीनजनेषु सानुकंपः। बहुधीर्वा घनचतुरो वक्ता संमानितो मुनिभिः।' गौरीतंत्रे 'असूयाक्रोधरहितो गर्वहीनः सुशांतधीः। संप्रदायी कृपापूर्णः श्रीभागवतवाचकः॥ नातिनीचस्वरो नात्युच्चस्वरो न विलुप्तधीः। नासूयुर्न खलः नापि नालसः क्रोधनश्चलः॥ न क्षीणो नच साधुद्विट् स्यात् भागवतवाचकः।' विधानमालायां 'पौराणीं वृत्तिमाश्रित्य ये जीवंति द्विजोत्तमाः। ते यांति ब्रह्मसायुज्यमन्ते ते गतकल्मषाः।' 'व्यासः श्वा चाऽभिजायते'इति स्कांदपाद्मवचने पौराणिकस्य शुनो योनिरुक्ता, सा तु कणलोभेन पुराणवक्तुर्नतु लोकोद्धारकामनया वक्तुः। 'विप्रैर्भागवती वार्ता गेहे गेहे जने जने। कारिता कणलोभेन कथासारस्ततो गतः॥' इति पाद्मात्। 'अधीयते च वृत्त्यर्थं ये तु भागवतं शुभम्। हरिणा स्वयमुद्दिष्टं तेऽपि सद्गतिमाप्नुयुरि'ति गौरीतंत्रवचस्त्वर्थवादः। अपिघटितत्वात् अपि वेदांतपारगमितिवत्। अथ तद्विधिः भारते 'नारायणं नमस्कृत्य नरं चैव नरोत्तमम्। देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥' जय इतिहासपुराणादिरिति कृत्यरत्नावल्यादौ। गौरीतंत्रे 'दिव्यमासनमास्थाय वाचकः कथयेत्कथाम्। तथा नमस्क्रियां कृत्वा वक्तृप्रच्छकश्रोतृभिः॥ उपक्रमोपसंहारे सादरं गिरिनंदिनि। स्कंधाध्यायाद्यंतपद्यं द्विस्त्रिर्वोच्चारयेच्छिवे।' विधानमालायां चतुर्वर्गचिंतामणौ पुराणसंग्रहे 'सर्वपापविनिर्मुक्तिकरणे यस्य मानसम्। कृत्वाऽऽह्निकं समाहूय वक्तारं शास्त्रकोविदम्। संभाव्यासनदानेन नमस्कुर्यात्तमंजसा॥' तत्र मंत्रः 'नमस्ते भगवन् व्यास सर्वशास्त्रार्थकोविद। ब्रह्मविष्णुमहेशानां मूर्ते सत्यवतीसुत। कथां श्रुत्वा पुनः पूजां कुर्याद्वक्तुः तमर्चयित्वा गंधाद्यैः पुराणं शृणुयात्ततः। पूर्वपक्षोक्तिसिद्धान्तपरिनिष्ठासमन्वितम्।

यत्र देव्यवताराश्च बहवः प्रतिपादिताः ॥' इति देवीयामलतंत्राभ्यां राधाप्रभृतिगोपीमाहात्म्यप्रतिपादकविष्णुभागवतस्यैव देवीभागवतपदवाच्यत्वम्। अत एव वाल्मीकीयरामायणे 'आदिकाव्यमिदं कृत्स्नं सीतामाहात्म्यमुत्तमम्।' इत्युक्तम्। पुराणादिप्रतिपाद्योपास्योपासकयोरन्यतरेण व्यपदेश इति तदाशयः। एतेनोभयोर्देवीभागवतविष्णुभागवतयोः पुराणमतभेदेनोपपुराणत्वं महापुराणत्वं चेति देवीभागवतटीकोक्तिः परास्तेत्याहुः। 'तत्र भागवतं पुण्यं पंचमं वेदसंमितमि'ति देवीभागवतवाक्ये तु भागवतपदेन विष्णुभागवतमेवोच्यते। मात्स्यादिक्रमस्य तत्राऽनुवादात्। मात्स्यादौ च विष्णुभागवतस्यैव निश्चितत्वात्। देवीभागवतीयगणनायां चतुर्थत्वेन भागवतगणनात्। न च 'लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम्। प्रौष्ठपद्यां पौर्णमास्यां स याति परमां गतिमिति मात्स्योक्तेर्देवीपुराणं देवीभागवतं वा महापुराणमिति चेन्न। ब्राह्मपाद्मवैष्णववाराहभागवतानां क्रमेण वैशाखीज्येष्ठीआषाढीश्रावणीभाद्रपदीषु दानस्योक्तत्वेनादोषात्। अन्यथा ब्राह्मपाद्मादिष्वपि पौर्णमासीग्रहणे बीजं वद। हेमसिंहेत्यस्य हेमसिंहासनस्थितमित्यर्थः। 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य'इति वार्तिकेन आसनपदस्य लोपात्। श्रुनायोगे सत्या भामा भीमइतिवत्। 'अष्टादशपलैः कुर्याद्धेमसिंहासनं प्रिये' इति गौरीतंत्रात् अत एव 'हेमसिंहयुतं चैतद्वैष्णवाय ददाति यः। कृष्णेन सह सायुज्यं स पुमाँल्लभते ध्रुवमि'ति पाद्मं संगच्छते। अन्यथा शाक्ताय देवीसायुज्यमित्यवक्ष्यत्। शैवलैंगादौ शिवरात्र्यादिकालस्य नंद्यादिवाहनस्यादर्शनाच्च। 'प्रणम्य च शिवां देवीं शर्वं भागवतं तथा। पुराणं संप्रवक्ष्यामि' इति देवीपुराणे। 'यदिदं कालिकाख्यं च मूलं भागवतं स्मृतमि'ति कालिकापुराणे। 'ततो भागवतं प्रोक्तं भागद्वयसमन्वितम्। ददाति सूर्यभक्ताय यस्तु भागवतं द्विजाः॥' इति सौरपुराणे चोक्तम्। तत्र भागवतपदं तत्तत्पुराणविशेषणं यौगिकमेव। त्रयाणामप्युपपुराणेष्वेव मात्स्यादौ गणनात्। तेषां मात्स्यगौरीतंत्रपाद्माद्युक्तभागवतलक्षणानाक्रांतत्वाच्च। अतो भागवतं नामान्यदिति नाशंकनीयमिति श्रीधरोक्तेः कालिकापुराणदेवीपुराणदेवीभागवतविष्णुभागवतानां भागवतपदाभिधेयानां मध्ये महापुराणं विष्णुभागवतमेव नान्यत् कालिकापुराणाद्याशंकनीयम्। अतो यत्राधिकृत्येत्यादिमात्स्याद्युक्तलक्षणस्य विष्णुभागवत एवोपलभ्यमानत्वादित्यर्थ इति न दोषः। ननु भारते मोक्षधर्मे भीष्मेण युधिष्ठिरं प्रति धर्मोपदेशप्रस्तावे शुकमुक्तिरुक्तेति कुत एव परीक्षित्पर्यंतं शुकानुवृत्तिरिति चेदत्र केचित्। नवमस्कंधे एकविंशेऽध्याये 'स कृत्व्यां शुककन्यायामि'ति श्लोकव्याख्यायां यद्यपि शुक उत्पत्त्यैव विमुक्तसंगो निर्वृतः, तथापि विरहातुरं व्यासमनुयातं दृष्ट्वा छायाशुकं निर्माय गतवान्। तदभिप्रायेणैव गार्हस्थ्यादिव्यवहार इत्युक्तम्। स च व्यवहारो हरिवंशे स्पष्टः। 'पराशरकुलोत्पन्नः शुको नाम महायशाः। व्यासादरण्यां संभूतो विधूमोऽग्निरिवोज्ज्वलन्॥ स तस्यां पितृकन्यायां वीरिण्यां जनयिष्यति। कृष्णं गौरप्रभं शंभुं तथा भूरिश्रुतं जयम्। कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम्। ब्रह्मदत्तस्य जननीं महिषीमणुहस्य चे'त्यादिना। भारतेपि 'छायां स्वपुत्रसदृशीं सर्वतोनपगां सदा। द्रक्ष्यसे त्वंच लोकेऽस्मिन् मत्प्रसादान्महामुने' इति। विष्णुपुराणादौ च प्रसिद्धोऽयम्। तथाच तस्य छायाशुकस्यैव वक्तृत्वांगीकारान्न कश्चिद्दोष इति वदंति। अन्ये तु तत्र मुक्तपदं जीवन्मुक्तपरम्। भागवतवक्तुः शुकस्यैव 'यं प्रव्रजंतमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहावे'ति प्रथमस्कंधे वर्णनात्। परिक्षित्शुकसंवादोत्तरं त्रिंशद्वर्षाऽधिकशतद्वयवर्षीयनारदसनत्कुमारसप्ताहोत्सवे 'परिभ्रमन् समायातः शुको योगेश्वरस्तदा। तत्रायया षोडशवार्षिकस्तदा प्रेम्णा पठन् भागवतं शनैः शनैरि'ति पाद्मे 'योगेश्वरः षोडशवार्षिकः भागवतं पठन्' इत्यादि विशेषणविशिष्टस्यैव शुकस्यागमनवर्णनाच्च। अंशिनं रुद्रं विहायांशस्य शुकस्य मुक्तेः सर्वप्रमाणविरुद्धत्वाच्च। तथाच तस्यैव भागवतवक्तृत्वमिति वदंति। ननु ज्योतिःशास्त्रे गोलाकारत्वं पृथिव्या उक्तम्, अत्र तु पंचमस्कंधे तद्विपरीतमुक्तमिति तद्विरुद्धमिदमिति चेत् सत्यम्। भागवतटीकायां विजयध्वजीयायां तात्पर्येच ५-१६ 'यथा भागवते तूक्तं भौवनं कोशलक्षणम्। तस्याविरोधतो योज्यं सर्वं ग्रंथांतरस्थितम्॥ अंडोदे पूरणं चैव व्यत्यासः क्षीरसागरे॥ राहुसोमरवीणां च मंडलाद् द्विगुणोक्तिताम्। विनैव सर्वमुन्नेयं योजनाभेदतोऽत्र तु॥' इति वचनात् ज्यौतिषाद्युक्तव्यवस्था न सतीत्युक्तेस्तद्विरोधस्याऽकिंचित्करत्वात्। युक्तं चैतत्। योगशास्त्रे पतंजलिना योगजप्रत्यक्षेण पौराणमानकभौवनकोशप्रत्यक्षोक्तेः। गणितानुमानस्य प्रत्यक्षतो दुर्बलत्वात्। पुराणानां वस्तुस्थितिप्रतिपादनार्थं प्रवृत्तत्वाच्च। भूगोलमुपक्रम्य एतदेवाखिलमहं मानतो लक्षणतश्च सर्वं विजिज्ञास्यामि इति राज्ञा पृष्टेन शुकेन भूगोलादिवर्णनोत्तरं 'भूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागगलोकसंस्था। गीता मया नृप तवाद्भुतमीश्वरस्य स्थूलं वपुः सकलजीवनिकायधामे'ति पंचमस्कंधे उक्तेः। तस्मादिदं कालविधानशास्त्रमिति वेदाङ्गज्यौतिषपर्यालोचनया ज्योतिःशास्त्रस्य कालज्ञानार्थं प्रवृत्तत्वेन तत्सौकर्यानुरोधेन तत्र पदार्थाकाराणां कल्पितत्वात्। अत एव सिद्धांतशिरोमणौ 'मूर्तो धर्ता चेद्धरित्र्यास्ततोन्यस्तस्याप्यन्योस्यैवमत्रानवस्था। अंत्ये कल्प्या चेत्स्वशक्तिः किमाद्ये किं नो भूमिः साष्टमूर्तेशमूर्तिः।' इतिवेदादिसिद्धशेषकूर्माद्यभाव उक्तः। यथा व्याकरणशास्त्रे घातको घटः पट इत्यादि सिद्ध्यर्थं कुत्ववृद्धितत्वसुप्रत्ययादयः कल्पितास्तद्वत्। तदुक्तं हरिणा। यद्यपि पदेन वर्णा विद्य तेवर्णेष्ववयवानच। वाक्ये पदानामत्यंतं प्रविवेको न कश्चन। तथापि उपायाः शिक्षमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते। उपेयप्रतिपत्त्यर्थमुपाया अव्यवस्थिता इति। उपेयस्य घातकादेः कालज्ञानस्य च प्रतिपत्त्यर्थं ज्ञानार्थं उपायाः कुत्वतत्वादयोगोलाकारापृथिवीत्यादयोऽव्यवस्थिताः अनियताः अवास्तविकाश्च। अतएव केचन वैयाकरणाः सुप्रत्ययमपरे सि प्रत्ययमाहुः। ज्योतिर्विदोऽपि केचन सूर्यादिभ्रमणमपरे पृथ्वीभ्रमणमाहुः। तथा चंद्रः स्त्री

बुधो नपुंसकः राहुस्तु पृथ्वीछायैव उपग्रहो वेत्याद्याहुः। प्रकारांतरैरपि विरोधपरिहारस्य मथुराक्षेत्रांतिककाम्यकवनीयग्रंथेषु चतुर्धरकृतभीष्मपर्वटीकायां शंकरभट्टकृतव्यासाविरोधग्रथे 'अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेदि' ति वाराहे च दृष्टत्वाच्च। अस्य विरोधस्य पुराणांतरेऽपि सत्त्वेन पर्यनुयोगानर्हत्वाच्च। एवमन्येऽपि विरोधाभासाः श्रीमदाचार्यकृतभागवततात्पर्यबोपदेवकृतपरमहंसप्रियावृंदावनीयसंदर्भवल्लभाचार्यीयटीकादिपर्यालचनया परिहर्तव्याः।

इति श्रीनारायणश्रीकरहाटक्षेत्रवासिवासुदेवाचार्यसुतनारायणाचार्यांगजगंगागर्भजगोपालाचार्यविरचिते भागवतभूषणे क्षुद्रोपद्रवनिवारणं नाम तृतीयोल्लासः।

श्रीकृष्णाय नमः। अथैतस्य श्रीमद्भागवतस्य श्रवणादिविधानं तच्चतुर्विधं निर्गुणं सात्त्विकं राजसं तामसं चेति। तदुक्तं स्कांदे भागवतमाहात्म्ये "वर्षमासदिनानां तु विमुच्य नियमाग्रहम्। प्रेमास्वादसुविस्तारं सेवनं निर्गुणं मतम्। पारीक्षितेऽपि संवादे निर्गुणं तत्प्रकीर्तितम्॥ तत्र सप्तदिनाख्यानं तदायुर्दिनसंख्यया। अन्यत्र त्रिगुणं चापि निर्गुणं तु यथेच्छया॥ मासेन ऋतुना वापि श्रवणास्वादसंयुतम्। सात्त्विकं यदनायासं समस्तानंदवर्धनम्॥ सप्ताहं यज्ञवद्यत्तु सश्रमं सत्वरं मुदा। सेवितं राजसं तत्तु बहुपूजादिशोभनम्॥ तामसं यत्तु वर्षेण सालसं श्रद्धया युतम्। विस्मृतिस्मृतिसंयुक्तं सेवनं तच्च सौख्यदम्॥ पाद्मे तु 'दिनानां नियमो नाऽस्ति सर्वदा श्रवणं मतमि'ति निर्गुणं श्रवणमुपक्रम्य 'सत्येन ब्रह्मचर्येण सर्वदा श्रवणं मतम्। अशक्यत्वात्कलौ बोध्यो विशेषोऽत्र शुकाज्ञया॥ मनोवृत्तिजयश्चैव नियमाचरणं तथा। दीक्षां कर्तुमशक्यत्वात्सप्ताहश्रवणं मतम्॥ मनसश्चाजयाद्रोगात् पुंसां चैवायुषः क्षयात्। कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतमि"ति तदनुकल्पः सप्ताह उक्तः। तस्य च कृतभूरिपरिश्रमेण श्रमाभाववानधिकारी। तथाच सप्ताहो द्विविधः। निर्गुणो राजसश्च कृतभूरिपरिश्रमकृतः श्रमाभावान्निर्गुणः। भागवतेऽकृतपरिश्रमकृतः श्रमसद्भावाद्राजसः। एवमेव मासेन ऋतुना वा कृतश्रवणस्य निर्गुणत्वं सात्त्विकत्वं च ज्ञेयम्। अत एव 'श्रद्धातः श्रवणे नित्यं माघे तावद्धि यत्फलम्। तत्फलं शुकदेवेन सप्ताहश्रवणे कृतमि'ति पाद्मे निर्गुणसप्ताहोपमानता माघमासीयश्रवणस्योक्ता संगच्छते। अथ देवः द्वादशस्कंधे 'पुष्करे मथुरायां च द्वारवत्यां यतात्मवानि'ति। विधानमालायां 'शिवालये गृहे चैत्र देवतासदने तथा। वृंदावने नदीतीरे तथा चैव गृहे शुभे॥ पुराणं शृणुयाद्भक्त्या यथोक्तविधिना गृही'ति। अथ कालः। स्कांदे भागवतमाहात्म्ये स्नातो नित्यक्रियाः कृत्वा प्राश्य पादोदकं हरेः। पुस्तकं च गुरुंश्चाऽपि पूजयित्वोपचारतः॥ ब्रूयाद्वा शृणुयाद्वाऽपि श्रीमद्भागवतं मुदा।' प्रथमस्कंधेऽपि 'प्रातर्हुतहुताग्नय' इति। दक्षस्मृतौ 'इतिहासपुराणाभ्यामहःशेषं नयेत्सुधीरि'त्यष्टधा विभक्तदिवसषष्ठसप्तमाष्टमभागौ उक्तौ। पाद्मे तु 'सदा सेव्या सदा सेव्या श्रीमद्भागवती कथे'ति सर्वोपि काल उक्तः अथ श्रोतृलक्षणम्। स्कांदे 'प्रवराअवराश्चेति श्रोतारो द्विविधा मताः। प्रवराश्चातको हंसः शुको मीनादयस्तथा॥ अवरा वृकभूरुंडवृषोष्ट्राद्याः प्रकीर्तिताः। अखिलोपेक्षया यस्तु कृष्णशास्त्रकथाश्रुतौ। स चातको० (१) हंसः स्यात्सारमादत्ते यः श्रोता विविधात् श्रुतात् (२) शुकः सुष्ठु मितं वक्ति व्यासं श्रोतृंश्च हर्षयन् (३) शब्देनाऽनिमिषो जातु करोत्यास्वादयन् रसम्। श्रोता स्निग्धो भवेन्मीनः० (४) यः स्तुवन् रसिकान् श्रोतृन् विरौत्यज्ञो वृको हि सः (५) भूरंडः शिक्षयेदन्यान् श्रुत्वा न स्वयमाचरेत्। (६) सर्वं श्रुतमुपादत्ते साराऽसारांधधीर्वृषः (७) स उष्ट्रो मधुरं मुंचन् विपरीते रमेत यः (८) अन्येऽपि बहवो भेदा द्वयोर्भृंगखरादयः। यः स्थित्वाऽभिमुखं प्रणम्य विधिवत् त्यक्तान्यवादो हरेर्लीलाः श्रोतुमभीक्षतेऽतिनिपुणो नम्रो विनीतांजलिः। शिष्यो विश्वसिताऽनुचिंतनपरः प्रश्ने ऽनुरक्तः शुचिर्नित्यं कृष्णजनप्रियो निगदितः श्रोता स वै वक्तृभिः।' गौरीतंत्रे 'हेतुवादरतो मूर्खः स्त्रीजितः कृपणः शठः। अहंयुः क्रोधनोऽसाधुः श्रोता न स्याद्वरानने॥ अथ वक्तृलक्षणं स्कांदे। भगवन्मतिरनपेक्षः सुहृदो दीनजनेषु सानुकंपः। बहुधीर्वा घनचतुरो वक्ता संमानितो मुनिभिः।' गौरीतंत्रे 'असूयाक्रोधरहितो गर्वहीनः सुशांतधीः। संप्रदायी कृपापूर्णः श्रीभागवतवाचकः॥ नातिनीचस्वरो नात्युच्चस्वरो न विलुप्तधीः। नासूयुर्न खलः नापि नालसः क्रोधनश्चलः॥ न क्षीणो नच साधुद्विट् स्यात् भागवतवाचकः।' विधानमालायां 'पौराणीं वृत्तिमाश्रित्य ये जीवंति द्विजोत्तमाः। ते यांति ब्रह्मसायुज्यमन्ते ते गतकल्मषाः।' 'व्यासः श्वा चाऽभिजायते'इति स्कांदपाद्मवचने पौराणिकस्य शुनो योनिरुक्ता, सा तु कणलोभेन पुराणवक्तुर्नतु लोकोद्धारकामनया वक्तुः। 'विप्रैर्भागवती वार्ता गेहे गेहे जने जने। कारिता कणलोभेन कथासारस्ततो गतः॥' इति पाद्मात्। 'अधीयते च वृत्त्यर्थं ये तु भागवतं शुभम्। हरिणा स्वयमुद्दिष्टं तेऽपि सद्गतिमाप्नुयुरि'ति गौरीतंत्रवचस्त्वर्थवादः। अपिघटितत्वात् अपि वेदांतपारगमितिवत्। अथ तद्विधिः भारते 'नारायणं नमस्कृत्य नरं चैव नरोत्तमम्। देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥' जय इतिहासपुराणादिरिति कृत्यरत्नावल्यादौ। गौरीतंत्रे 'दिव्यमासनमास्थाय वाचकः कथयेत्कथाम्। तथा नमस्क्रियां कृत्वा वक्तृप्रच्छकश्रोतृभिः॥ उपक्रमोपसंहारे सादरं गिरिनंदिनि। स्कंधाध्यायाद्यंतपद्यं द्विस्त्रिर्वोच्चारयेच्छिवे।' विधानमालायां चतुर्वर्गचिंतामणौ पुराणसंग्रहे 'सर्वपापविनिर्मुक्तिकरणे यस्य मानसम्। कृत्वाऽऽह्निकं समाहूय वक्तारं शास्त्रकोविदम्। संभाव्यासनदानेन नमस्कुर्यात्तमंजसा॥' तत्र मंत्रः 'नमस्ते भगवन् व्यास सर्वशास्त्रार्थकोविद। ब्रह्मविष्णुमहेशानां मूर्ते सत्यवतीसुत। कथां श्रुत्वा पुनः पूजां कुर्याद्भक्त्या तमर्चयित्वा गंधाद्यैः पुराणं शृणुयात्ततः। पूर्वपक्षोक्तिसिद्धान्तपरिनिष्ठासमन्वितम्।

प्रयत्नतः। नारायणं हृषीकेशं मानसे परिचिंतयेत्। निधाय तुलसीमिश्रपुष्पदाममतंद्रितः॥ प्रार्थयित्वा हितं विप्रं भोजयेत् प्रयतः शुचिः। अन्यांश्च भोजयेद्विप्रान् विधिवन्मानपूर्वम्। एवं नित्यकथां विद्वान् शृणुयान्मधुघातिनः॥ कथासमाप्तौ विप्रस्य व्यासरूपस्य धीमतः। दद्याद्वित्तं च वस्त्राणी'ति। गौरीतंत्रे 'उपदेशं विना व्यासो नाज्ञासीत्पूर्वमीश्वरि। तस्मात् प्रयत्नतः कार्य उपदेशः सतो मुखात्॥ उपक्रमोपसंहारे हरिकीर्तनमाचरेत्। एतस्य पाठकाले तु अन्यालापांश्च वर्जयेत्॥' भारते शेषधर्मे 'श्रीरागेण पूर्वीरागेणान्येन वा पुराणं पठनीयमि'त्युक्तम्। स्कांदे ब्रह्मोत्तरखंडे 'सोष्णीषो न शृणुयात् व्यासपीठस्थो वक्ता न कस्मैचित् प्रणमेत् उत्थापयेद्वे'ति उक्तम्। अथाहारः स्कांदे॥ 'पयसा च हविष्येण मौनं भोजनमाचरेत्।' गौरीतंत्रे। अश्नन्ननश्नन् शृणुयाद्वाचयेद्वा धरात्मजे। सकामः शृणुयात् सुभ्रु कथयेद्वा उपोषितः॥' शूद्रस्तु शृणुयादेव न पठेत्। अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च। श्रोतव्यमेव शूद्रेण नाऽध्येतव्यं कदाचनेति शूलपाणौ पुराणाऽधिकारे भविष्योक्तेः। 'न वेदेष्वधिकारो हि कश्चिच्छूद्रस्य विद्यते। पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिहे'ति शूलपाणिस्थपाद्मवचने श्रवणे इति शेषः। हरिवंशे। 'सुगतिमियात् श्रवणाच्च शूद्रजातिरि'ति द्विजानां पठनेन सुगतिमुक्त्वा शूद्राणां श्रवणेन सुगतिरुक्ता। अत एव 'शूद्रः सुखमवाप्नुयादि'ति विष्णुसहस्रनामव्याख्यानावसरे शूद्रः श्रवणेनैवेति शंकराचार्यैर्व्याख्यातम्। बालकांडीयाद्यसर्गव्याख्यायां नागोजीभट्टोप्येवम्। एवंच भागवतादौ पृथग्व्याख्यानद्वादशस्कंधादौ यच्छूद्रस्य फलमुक्तं तत् श्रवणेनैवेति बोध्यम्। तच्च श्रवणं ब्राह्मणं हरिं चाग्रतः कृत्वा कार्यम्। भारते 'आवयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इत्युक्तेः। नारदीये शूद्रानुपक्रम्य तेषां मध्ये हरेरग्रे पठनीयं द्विजातिभिरित्युक्तेश्च। स्पष्टंचेदं शूद्राऽऽचारशिरोमणौ शूद्रकमलाकरे निर्णयसिंधौ धर्मसिंधौ च श्राद्धप्रकरणे। एवं च ये इदानींतनाः शूद्रादयो गीताभागवतविष्णुसहस्रनामचंडीपाठं पठंति ते नारकिण एवेति सहृदयैराकलनीयम्। 'शूद्रवदेव स्त्रीणां परभूसंज्ञकानां स्वर्णकारादीनां च श्रवणे एवाधिकारो न तु पठने' इति शूद्रकमलाकरे। अथ प्रयोगः 'श्रोता वक्ता वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य विष्णुप्रीतिकामोऽन्यकामो वा श्रीविष्णुप्रेरणाया श्रीविष्णुप्रीत्यर्थं श्रीमद्भागवतश्रवणं पठनं वा करिष्ये' इति संकल्प्य गणपतिं संपूज्य दिव्यासनस्थाय पुराणवक्त्रे 'नमस्ते भगवन् व्यास सर्वशास्त्रार्थकोविद। ब्रह्मविष्णुमहेशानां मूर्ते सत्यवतीसुत॥ इति मंत्रेण नमस्कृत्य गंधाद्यैरर्चयित्वा भागवतपुस्तकं संपूजयेत्। ततो वक्ता भागवतपुस्तकं संपूज्य गणेशं नत्वा। नारायणाय नमः। नराय नमः। नरोत्तमाय नमः। देव्यै नमः। सरस्वत्यै नमः। व्यासाय नमः। गुरुभ्यो नमः। इति श्रोतृभिः सह नमस्कृत्य हरिकीर्तनं कृत्वा स्कंधाध्यायाद्यंतपद्यं द्विस्त्रिर्वोच्चारयन् अन्यालापान् वर्जयन् गुरूपदिष्टं भागवतं श्रीरागेण पूर्वीरागेणाऽन्येन वा रागेण पठेत्। कथासमाप्तौ च हरिकीर्तनं कुर्यात्। ततः श्रोता वक्तारं विप्रं गंधाद्यैः संपूज्य तुलसीदलमिश्रितपुष्पमालां तद्गले निधाय तं भोजयित्वाऽन्यानपि भोजयेत्। एवं प्रत्यहं पुराणसमाप्तिपर्यंतं कृत्वा तत्समाप्तौ व्यासरूपिणो वाचकस्य यथाविभवं वस्त्रभूषणदक्षिणादिभिः पूजां कृत्वा ब्राह्मणान् भोजयेदिति। अथ पाद्मोक्तसप्ताहयज्ञविधानम्। सप्ताहश्च सप्तदिवसाधिकरणक विष्णुभक्तब्राह्मणमुखतः स्पष्टव्याख्यानसहितद्वादशस्कंधश्रवणं न तु केवलमूलश्रवणं नापि स्वतः पठनम्–'विरक्तो वैष्णवो विप्रो वक्ता कार्योतिनिस्पृहः। प्रथमस्कंधतः स्पष्टव्याख्यानं धेनुजोऽकरोत्॥ सप्ताहश्रवणेनैवेति पाद्मात्।' (धेनुजो गोकर्णः) परोद्धरचिकीर्षया सप्ताहवक्तुरपि मुक्तिः। सप्ताहवक्तारं गोकर्णं तु समालिंग्याकरोत्स्वसदृशं हरिरि'तिपाद्मात्। केचित्तु 'सत्येन ब्रह्मचर्येण सर्वदा श्रवणं मतम्। दिनानां नियमो नाऽस्ति सर्वदा श्रवणं मतम् दीक्षां कर्तुमशक्यत्वात्सप्ताहश्रवणं मतम्। श्रद्धातः श्रवणे नित्यं माघे तावद्धि यत्फलम्। तत्फलं शुकदेवेन सप्ताहश्रवणे कृतम्। मनसश्चाजयाद्रोगात्पुंसां चैवायुषः क्षयात्। कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतमि'त्यादिपाद्मादिवाक्येषु श्रवणपदं पठनस्योपलक्षकं 'पुस्तकं च गुरूंचापि पूजयित्वोपचारतः। ब्रूयाद्वा शृणुयाद्वापि श्रीमद्भागवतं मुदा॥ अश्नन्ननश्नन् शृणुयाद्वाचयेद्वा धरात्मजे। सकामः शृणुयात् सुभ्रु कथयेद्वा उपोषितः॥' इति स्कांदगौरीतंत्राद्युक्तभागवतसेवनानुकल्पत्वात्सप्ताहादिविधेः। अत एव स्कांदे 'सप्ताहं यज्ञवद्यत्तु सश्रमं सत्वरं मुदा। सेवितं राजसं तत्तु बहुपूजादिशोभनमि'ति श्रवणपठनोभयबोधकः सेवनशब्द उपात्तः। श्रोत्रनपेक्षपठने च अर्थपरिकीर्तनं व्यर्थमेव। पठने नैव तद्बोधात्। अतः श्रोत्रनपेक्षः अर्थपरिकीर्तनरहितः केवलसंहितापाठोऽपि सप्ताहयज्ञः। शिष्टाचारोऽप्येवमिति प्राहुः तत्राधिकारिणः। धर्मार्थकाममोक्षान्यतमकामोऽकामश्चाधिकारी। 'दुःखदारिद्र्यदौर्भाग्यपापप्रक्षालनाय च। कामक्रोधजयार्थं च कलौ धर्मोऽयमीरितः॥ दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्मवान्। अनपत्यो मोक्षकामः शृणुयाच्च कथामिमाम्। अपुष्पा काकवंध्या च वंध्या याच मृतार्भका। स्रवद्गर्भा च या नारी तया श्राव्यः प्रयत्नतः॥' इति पाद्मात्। ते च चंडालम्लेच्छजैनपाशुपतव्रात्यवामोदक्यासूतकिमृतकादिभिन्नाः। ब्राह्मणक्षत्रियवैश्यशूद्रसंकरः। 'विप्रोधीत्याप्नुयात् प्रज्ञां राजन्योदधिमेखलाम्। वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकादि'ति द्वादशस्कंधात्। अत्र शूद्रः श्रवणेनैवेति शंकराचार्यादय इति प्रागुक्तम्। 'स्त्रियः शूद्रादयो ये च तेषां बोधो यतो भवेदि'ति पाद्माच्च। अनुलोमसंकराणां मातृजातित्वमिति शंखस्मृतेश्च प्रतिलोमसंकराणामपि चंडालेतरेषां श्रवणाधिकारस्य कमलाकरेण समर्थितत्वाच्च। 'रजस्वलांऽत्यजम्लेच्छपतितव्रातकैस्तथा। द्विजद्विड्वेदबाह्यैश्च न वदेद्यः कथाव्रती'ति पाद्माच्च। इम एव श्रोतार इत्युच्यंते। अथैतेषां श्रोतॄणां नियमाः पाद्मे 'विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे।

ब्रह्मचर्यमधः सुप्तिः पत्रावल्यां च भोजनम्। कथासमाप्तौ भुक्तिं च कुर्यान्नित्यं कथाव्रती॥' अत्यशक्तस्तु मध्येऽपि पयआदिकं भक्षयेत्। 'इक्षुरापः फलं मूलं ताम्बूलं पयऔषधम्। भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः॥' इति स्मृतेः। तत्रैव 'द्विदलं मधु तैलं च गरिष्ठान्नं तथैव च। भावदुष्टं पर्युषितं जह्यान्नित्यं कथाव्रती॥ कामं क्रोधं मदं मानं मत्सरं लोभमेव च। दंभं मोहं तथा द्वेषं दूरयेच्च कथाव्रती॥ वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा। स्त्रीराजमहतां निंदां वर्जयेद्यः कथाव्रती॥ रजस्वलांत्यजम्लेच्छ-पतितव्रात्यकैस्तथा। द्विजद्विड्वेदबाह्यैश्च न वदेद्यः कथाव्रती॥ सत्यं शौचं दयां मौनमार्जवं विनयं तथा। उदारमानसं तद्वदेवं कुर्यात् कथाव्रती। वैष्णवं ब्राह्मणं मुख्यं श्रोतारं परिकल्प्य स इति पाद्मात् मुख्यश्रोता च कार्यः। अथ वक्तृलक्षणं 'पाद्मे विरक्तो वैष्णवो विप्रो वेदशास्त्रविशुद्धिकृत्। दृष्टांतकुशलो धीरो वक्ता कार्योऽतिनिस्पृहः॥ अनेकधर्मविभ्रांताः स्त्रैणाः पाखंडवादिनः। शुकशास्त्रकथोच्चारे त्याज्यास्ते यदि पंडिताः॥ अथ वक्तृनियमाः पाद्मे 'वक्त्रा क्षौरं प्रकर्तव्यं दिनादर्वाग्व्रताप्तये। अरुणोदयेऽसौ निर्वर्त्य शौचं स्नानं समाचरेत्॥ अथो वक्तृसहायलक्षणं पाद्मे। 'वक्तुः पार्श्वे सहायार्थमन्यः स्थाप्य-स्तथाविधः। पंडितः संशयच्छेत्ता लोकबोधनतत्परः॥' इति। अथ देशः पाद्मे 'तीर्थे वाऽपि वने वाऽपि गृहे वा श्रवणं मतम्। विशाला वसुधा यत्र कर्तव्यं तत्कथास्थलम्॥' द्वादशस्कंधे 'पुष्करे मथुरायां च द्वारावत्यां यतात्मवानि'ति। अथ मंडपादि पाद्मे। 'कर्तव्यो मंडपः प्रोच्चैः कदलीखंडमंडितः। फलपुष्पदलैर्विष्वग्वितानेन विराजितः॥ चतुर्दिक्षु ध्वजारोपो बहु-संपद्विराजितः। ऊर्ध्वं सप्तैव लोकाश्च कल्पनीयाः सुविस्तरम्। तेषु विप्रा विरक्ताश्च स्थापनीयाः प्रबोध्य च॥ पूर्वं तेषामासनानि कर्तव्यानि यथोत्तरम्। वक्तुश्चाऽपि तदा दिव्यमासनं परिकल्पयेत्॥' अथ कालः पाद्मे 'नभस्य आश्विनोर्जौ च मार्गशीर्षः शुचिर्नभाः। एते मासाः कथारंभे श्रोतॄणां मोक्षसूचकाः॥' नेयं परिसंख्या। अग्रे सर्वथेत्युक्तेः। अतोऽन्येष्वपि मासेषु अन्येष्वपि पक्षेषु अन्यास्वपि तिथिषु सप्ताहकथाऽऽरंभो भवति। यथा संक्रान्तिप्रकरणे 'संक्रांतिः पक्षिणी ज्ञेया यद्दिने संक्रांतिः तदहः पुण्यकालः पूर्वापराः षोडश पुण्यकाल'इति वचनानां पूर्वाऽऽबाधेनोत्तरोत्तरप्राशस्त्यमात्रपरता माधवादिभिरादृता तथेहाऽपीति केचित्। 'मासानां विग्रहे यानि तानि त्याज्यानि सर्वथा।' विग्रहे कृष्णपक्षे। अमांतमानपूर्णिमां-तमानयोस्तत्रैव हि विवादः। तत्राऽपि शुक्लपक्षीयनवम्यामेव। 'नवमीतो नभस्ये च कथारंभं शुकोऽकरोत्। शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत् कथाम्। ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः इति पाद्मोपनिबद्धशिष्टाचारात्। अथ द्रव्यं 'विवाहे यादृशं वित्तं तादृशं परिकल्पयेत्।' अथ प्रयोगः। ज्योतिर्विदादिष्टाऽऽषाढश्रावणभाद्रपदाश्विनकार्तिकमार्गशीर्षान्यतममासीय-शुक्लपक्षीयनवमीरूपसप्ताहयज्ञप्रारम्भदिवसात् पूर्वेद्युः श्रोताऽरुणोदये स्नातः कृतनित्यक्रियस्तीर्थक्षेत्रवनगृहाऽन्यतमे शुचौ देशे कृतं कदलीखण्डमण्डितं फलपुष्पदलैस्तिर्यक्वितानेन विराजितं चतुर्दिक्षु ध्वजारोपेण युक्तं बहुसंपद्विराजितं ऊर्ध्वं सुविस्तरं कल्पितैः सप्तलोकैर्युक्तं तेषु सप्तलोकेषु आसनस्थैर्विप्रैर्विरक्तैश्च युक्तं दिव्येन कथावक्तुरासनेन युक्तं अत्युच्चमंडपं प्रविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं सप्तदिवसाऽधिकरणकसार्थश्रीमद्भागवतश्रवणरूपसप्ताहयज्ञं करिष्ये इति संकल्प्य। सकामश्चेत् पुत्रकामः सप्ता० करिष्ये। धनकामः सप्ता० करिष्ये। स्त्रीकामः सप्ता० करिष्ये। इत्यादि-कर्तृविशेषणघटितं संकल्प्य। तदंगत्वेन विहितं कथाविघ्नविघातार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं नान्दीश्राद्धं च करिष्ये इति संकल्प्य गणपतिपूजनस्वस्तिपुण्याहवाचननांदीश्राद्धानि कृत्वा शरीरशुद्ध्यर्थं सर्वप्रायश्चित्तं च कृत्वा मंडले श्रीकृष्णं षोडशोपचारैः संपूज्य विशेषतः प्रदक्षिणनमस्कारान् कृत्वा स्तुवीत। तत्र मन्त्रः 'संसारसागरे मग्नं दीनं मां करुणानिधे। कर्ममोहगृहीताङ्गं मामुद्धर भवार्णवात्॥' इमां श्रीकृष्णमूर्तिं सप्ताहसमाप्तिपर्यन्तं प्रत्यहं पूजितां स्थापयेदिति शिष्टाः। ततः श्रीमद्भागवतपुस्तकं प्रीत्या विशेषतो धूपदीपयुक्तैरुपचारैः संपूज्य तत्पुरतः श्रीफलं धृत्वा नमस्कृत्य प्रसन्नचित्तेन तत् स्तुवीत। तत्र मन्त्रौ 'श्रीमद्भागवताख्योऽयं प्रत्यक्षः कृष्ण एव हि। स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे॥ मनोरथो मदीयोऽयं सफलः सर्वथा त्वया। निर्विघ्नेनैव कर्तव्यो दासोऽहं तव केशव॥' ततः प्राक् कल्पितासने उदङ्मुखं प्राङ्मुखं वा कृतक्षौरं विरक्तं वेदशास्त्रविशुद्धिकर्तारं दृष्टान्तकुशलं वैष्णवं विप्रं शुकमूर्तिं वक्तारमुपवेश्य वस्त्रभूषणादिभिः संभूष्य संपूज्य स्तुवीत। तत्र मन्त्रः 'शुकरूप प्रबोधज्ञ सर्वशास्त्रविशारद। एतत्कथाप्रकाशेन मदज्ञानं विनाशय॥' शुकरूपेत्यस्य शुकावेशयुक्तेत्यर्थः। ततो वक्तुर्दक्षिणपार्श्वे सहायार्थं लोकबोधतत्परं संशयच्छेत्तारं वक्तृतुल्यं पण्डितं उत्तमासने उपवेश्य वस्त्रभूषादिभिः संभूष्य संपूजयेत्। ततः वैष्णवं ब्राह्मणं मुख्यश्रोतारं परिकल्प्य संपूजयेत्। ततः उपोषणघृतपानपयःपानफलाहारैकभक्तान्यतमनियमं संकल्पयेत्। तद्यथा 'श्रीमद्भागवतसप्ताहश्रवणाङ्गभूतं सप्ताहं एकभक्तमहं करिष्ये।' फलाहारादिकरणे तु एकभक्तपदस्थाने फलाहारमित्याद्यूहः कार्यः। ततः 'कथाभङ्गनिवृत्त्यर्थं पंचसंख्याकब्राह्मणद्वारा द्वादशाक्षरजपमहं करिष्ये इति संकल्प्य तज्जपार्थं पञ्चब्राह्मणान् वृणुयात्। तैश्च प्रत्यहं कथावसानपर्यन्तं द्वादशाक्षरो जाप्य इति शिष्टाः। ततः कथाश्रवणोत्तरं प्रत्यहं ताल-मृदंगादियुक्तं कीर्तनार्थं कीर्तनकारिणो वैष्णवान् ब्राह्मणान् वृत्वा संपूज्य एकवारं हविष्यं भुंजीत। इति पूर्वदिनकृत्यम्। यद्यपि एतावत् कृत्यं पूर्वेद्युः कार्यमिति पाद्मे नोक्तं तथापि महत्सु पूर्वेद्युरिति गृह्यपरिशिष्टन्यायेन ज्योतिष्टोमादिषु तथैव दर्शनेनाऽ-स्याऽपि पाद्मादौ यज्ञत्वेन व्यवहृतत्वाच्चोक्तम्। ततः परदिनेऽरुणोदये वक्त्रादिभिः सह स्नात्वा संध्यां संक्षेपतः कृत्वा लोकवित्त-

धनागारपुत्रचिन्तां व्युदस्य मण्डपं गत्वा पूर्वकल्पितसप्तलोकेषु आसनानि निधाय तेषु वैष्णवान् विरक्तांश्चोपवेश्य विदुषो ब्राह्मणान् स्त्रीः शूद्रांश्च आकारितान् यथास्थानमुपवेश्य आगन्तुकान् सर्वान् तद्योग्यताऽनुसारेणैवोपवेश्य गणपतिं स्मृत्वा श्रीकृष्णपूजां श्रीमद्भागवतपूजां वक्तृपूजां उपवक्तृपूजां श्रोतृपूजां च विधाय वक्तोदङ्मुखश्चेत् प्राङ्मुख आसने उपविश्य वक्ता प्राङ्मुखश्चेत् उदङ्मुखआसने उपविश्य सूर्योदयमारभ्य सार्धत्रिप्रहरपर्यन्तं कथाचित्तः शुद्धमतिः सार्थं श्रीमद्भागवतं शृणुयात् ६ दि० ५० अ० ७ दि० ३५ अ० इत्याचारः। कुतुपसंज्ञकेऽष्टमे मुहूर्ते घटिकाद्वयरूपे विरामं कृत्वा तत्र मध्याह्नसन्ध्याब्रह्मयज्ञादि संक्षेपतः कुर्यात्। कथासमाप्त्यनन्तरं तालमृदङ्गादिभिर्वैष्णवैर्ब्राह्मणैर्हरिकीर्तनं कार्यम्। ततः द्विदलमधुतैलगरिष्ठान्नभावदुष्टपर्युषितादिभिन्नं हविष्यं यथासुखं लघु एकवारं पत्रावल्यां भुंजीत। वक्त्रादीनामप्येवमेव भोजनम्। ततः सायं संध्यादि विधाय ब्रह्मचारी अधः शय्यायां शयीत। एवं प्रत्यहम्। ततः समाप्ते सप्ताहयज्ञे सप्तमदिवसे श्रोतृभिः पुस्तकपूजा वक्तृपूजा च यथाविभवं कार्या। वक्ता च श्रोतृभ्यः कृष्णसमर्पिततुलसीमालारूपं प्रसादं दद्यात्। ततः श्रोता उपवक्तृपूजां मुख्यश्रोतृपूजां च कृत्वा जापकेभ्यो दक्षिणां दत्वा मृदंगतालललितं हरिदासैर्ब्राह्मणैः कीर्तनं कारयित्वा जयशब्दं नमः शब्दं शंखशब्दं च कारयित्वा चूर्ण (गुलाल) लाजा-प्रसूनानि विकीर्य हरिकथावक्तॄन् यथाविभवं संपूज्य परेऽहनि सकामश्चेत् जन्माष्टमीव्रतवदुद्यापनं कृत्वा पायसमधुतिलघृतान्ना-दिभिर्दशमस्य, प्रतिश्लोकं हुत्वा गायत्र्या वा हुत्वा होमाऽशक्तौ तावद्धौम्यं वा ब्राह्मणाय दद्यात्। निष्कामश्चेद्गीतामात्रं पठेत्। ततो निष्कामः सकामश्च नानाछिद्रनिरोधार्थं न्यूनाधिकतादोषप्रशमार्थं च विष्णुसहस्रनामपठनं करिष्य इति संकल्प्य पठेत्। ततो मधुपायसैर्द्वादश ब्राह्मणान् भोजयित्वा ब्राह्मणाय सुवर्णं धेनुं च दत्वा विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं यथाविभवं दद्यात्। स शक्तश्चेत् विंशत्यधिकशतपरिमितमाषरूपपलत्रयमितं स्वर्णसिंहं विधाय तत्र पुस्तकं संस्थाप्यावाहनाद्यैः संपूज्य वस्त्रभूषणगंधाद्यैः पूजिताय यतात्मने आचार्याय दद्यात्। तेन भवबंधेभ्यो मुक्तो भवेत्। सकामश्चेदीप्सितं कामं प्राप्नुयादिति। अष्टोत्तरशतवृत्त्या भागवतपुरश्चरणमिति शिष्टाः। भागवतशकुनप्रकारो ब्रह्मयामलोक्तो विधामपालायामिति शिवम्। इत्थं यथामति कृतं भागवत-भूषणम्। प्रीयतां तेन भगवान् मथुरानायकोऽच्युतः॥ ॐ॥

इति श्रीनारायणपरायणश्रीकरहाटकक्षेत्रवासिवासुदेवाचार्यसुतनारायणाचार्यगजगंगागर्भजगोपालाचार्यविरचिते श्रीभागवतभूषणे सप्ताहविधानकथनं नाम चतुर्थोल्लासः। श्रीकृष्णार्पणमस्तु। अनुक्तपूरण-दुरुक्तनिष्कासनाभ्यां भगवद्भक्ताः साधवः शोधयन्तु। इति भागवतभूषणं समाप्तम्॥

'श्रीमद्भागवतस्यादौ महिमा मंगलोत्तरा। श्लोकानुवादः पाश्चीयः, श्रवणं मुक्तिसाधनम्॥ १॥ कृष्णसान्निध्यमेतस्मिन् कल्पितत्वनिराकृतिः। श्रीभागवतशब्दस्य देवीभागवतं नहि॥ २॥ तात्पर्यविषयः किंतु गायत्रीभाष्यमेव सः। एतद्द्वादशस्कन्धानां नारदोक्तो ह्यनुक्रमः॥ ३॥ एतत्पूजाफलं प्रोक्तमुल्लासे प्रथमे इह। अस्याप्रामाण्यशङ्का हि वामादीनां कुमार्गता॥ ४॥ बोपदेव-कृतत्वस्य खण्डनं वाधकानि तु। अप्रामाण्यस्य शङ्कायामेतद्व्याख्यानिदर्शनम्॥ ५॥ हेतूनां व्यभिचारित्वं विस्तरेण निरूपितम्। हेमाद्रिबोपदेवीयग्रन्थानां गणनं ततः॥ ६॥ बोपदेवीयटीकायामागमत्वनिरूपणम्। हेमाद्रिरचिताष्टीकाः सन्त्यस्या मथुरादिषु॥ ७॥ श्रीमद्भागवतीयानां हेमाद्रावार्षतोदिता। प्रोक्तं भागवताय स्यादिति निर्वचनं कृतम्॥ ८॥ तत्रास्योक्तं पुराणत्वं बोपदेवो हि संमतः। हेमाद्रिसमकालो ह्ययं ज्ञानेश्वरोत्तरः॥ ९॥ ग्रन्थे प्राच्ये बोपदेवात् श्लोका भागवतस्य हि। प्रमाणत्वेन लभ्यन्ते, भाष्ये शारीरके तथा॥ १०॥ अनुपन्यासस्य बीजं चतुर्धरस्य संमतिः। विरोधोन्यपुराणानामाशङ्क्य हि निराकृतः॥ ११॥ वैष्णवस्य पुराणस्य विरोधपरिहारणे। सिद्धान्तदर्पणमतं, कृत्वेतिकनिबन्तकम्॥ १२॥ दशलक्षणमित्यस्य पुराणं पञ्चलक्षणम्। विरोधः साकमेतेन ततस्तस्य निराकृतिः॥ १३॥ अष्टादशसहस्रस्य उपपत्तिर्निरूपिता। अन्यथा बाधकं प्रोक्तमुल्लासे हि द्वितीयके॥ १४॥ प्रामाणिकावुभौ पाठौ श्रीधरो वैजयध्वजः। विद्यारण्यमहाभाष्ये प्रमाणं हि उदाहृतिः॥ १५॥ देवीभागवतं चापि निर्मितं भारतोत्तरम्। महापुराणता नास्ति देवीभागवतस्य हि॥ १६॥ यत्राधिकृत्य गायत्रीमित्यस्यार्थस्तदेव हि। विष्णुभागवतं नाम गायत्र्यर्थो हरेः स्मृतिः॥ १७॥ श्रीमैत्रायणीयप्रभृतिवचनानां व्यवस्थितिः। हयग्रीवब्रह्मविद्यामन्त्रविद्याविचारणम्॥ १८॥ वृत्रासुरवधोपेत-मित्यस्यार्थनिरूपणम्। सारस्वतस्य कल्पस्येत्यस्यार्थो हि निरूप्यते॥ १९॥ शैवस्य हि पुराणस्य वचनानां विचारणम्। अप्रमाणं केचिदाहुर्देवीभागवतं त्विदम्॥ २०॥ शारदं नवरात्रं हि विष्णुदैवतमेव च। पारायणं तत्र कुर्यात् श्रीमद्भागवतस्य च॥ २१॥ देवीभागवतस्यैव टीकायाः खण्डनं कृतम्। हेमसिंहसमन्वितमित्यस्यार्थनिरूपणम्॥ २२॥ अन्यत्वस्य समाशङ्का शुकमुक्तिविचारणम्। श्रीमद्भागवतस्येह विरोधो ज्यौतिषे न हि॥ २३॥ निराकृतः समाशङ्क्य उल्लासे हि तृतीयके। चतुर्विधं श्रवणादि सप्ताहो द्विविधो मतः॥ २४॥ माघमासे भागवतश्रवणं देशशंसनम्। कालः श्रोतुर्लक्षणं हि श्रोतारो द्विविधा मताः॥ २५॥ दुःश्रोतृलक्षणं चाथ वक्त्रो-र्लक्षणं ततः। पठनं हि पुराणानां कणलोभेन वर्जितम्॥ २६॥ पुराणवक्ता मुच्येत लोकोद्धरणकामुकः। पुराणपाठश्रवणविधिः पाठो गुरुर्लकृतः॥ २७॥ आद्यन्तयोर्हरेः कीर्तिः पाठो रागादिभिर्युतः। शृणुयान्नैव सोष्णीषो भक्त्या भागवतं परम्॥ २८॥ व्यासपीठास्थितो वक्ता कस्मैचित्प्रणमेन्न हि। आहारोऽथ पठेन्नैव शूद्रः श्रवणमर्हति॥ २९॥ ब्राह्मणं वा हरिं चाग्रे कृत्वा हि

शृणुयादिदम्। स्त्रिया प्येवंविधं कार्यं, प्रयोगः श्रवणस्य च ।। ३० ।। सप्ताहस्य विधानं च लक्षणं परिकीर्तितम्। तत्राधिकारिणः प्रोक्ताः श्रोतृणां नियमास्ततः। समाप्तौ भोजनं कुर्यादस्य शक्तौ फलादिकम् ।। ३१ ।। मध्येपि भक्षयेत्किंचिन्मुख्यश्रोतृप्रकल्पनम्। लक्षणं नियमा वक्तुः सहायस्य च लक्षणम् ।। ३२ ।। देशकालौ मण्डपादि द्रव्ये यत्ता ततो विधिः। आरम्भदिवसात्पूर्वं कृत्यं संकल्पकामने ।। ३३ ।। प्रायश्चित्तविधिर्वक्तुरुपवक्तुश्च पूजनम्। मुख्यश्रोतुः पूजनं च एकभक्तादिसंयमः ।।३४।। वरणं ब्राह्मणानां च द्वादशाक्षरजापिनाम्। वरणं पूजनं चैव हरिदासस्य संमतम् ।। ३५ ।। एतावतः कर्मणो हि पूर्वेद्युः करणं मतम्। आरम्भदिनकृत्यं हि वक्तुः श्रोतुर्यमा दिशः ।। ३६ ।। प्रत्यहं श्रवणस्यैव विरामो हरिकीर्तनम्। पूजनं पुस्तकादीनां होम उद्यापनं ततः ।। ३७ ।। पुस्तकस्य तथा दानं पुरश्चर्या ततः परम्। शकुनानां प्रकारश्च चतुर्थे परिकीर्तितः ।। इति

विद्योदयो निराकुर्यादविद्यातिमिरं सदा।<br>
सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः ।।

श्रीहरिः शरणम्

# अथ श्रीमद्भागवताद्यपद्यव्याख्याशतकम् ।

॥ ॐ स्वस्ति ॥ श्रीगणेशाय नमः ॥

हेरम्बं गिरिजापतिं च गिरिजां स्कन्दं गुरुं भारतीं श्रीभानुं पितरं निजं च जननीं विद्यागुरून् सर्वतः ।
नत्वा श्रीवृषभानुजाप्रियतमं कृष्णं वृतं वल्लवैः कालिंदीविपिने विहारनिरतं वन्द्यं हि वृंदारकैः ॥ १ ॥
श्रीमत्सद्गुरुपादपद्ममकरंदास्वादभृंगाकृतिर्विप्रो गौडकुलोद्भवो हरिरतो वंशीधरो लब्धवाक् ।
कुर्वे भागवताद्यपद्यविषये व्याख्याशतं मोददं सुज्ञानां पठतां च बोधजनकं सर्वागमानां परम् ॥ २ ॥

गणेशो भारती भानुः शंकरस्तत्प्रिया तथा । तपः सज्जनसंगश्च गुरुरोंकार एव च ॥ कर्ममत्स्यौ च कमठौ नारदश्रीनृसिंहकौ । धन्वंतरी रामकृष्णौ श्रीगंगा ब्राह्मणस्तथा ॥ वाराहो वामनश्चैव पर्शुरामबलौ तथा । बुद्धः कल्किहयग्रीवौ दत्तः कपिल एव च । सनकाद्या गवां शैलः श्रीराधा कीर्तिनंदिनी । वृन्दावनं हरेर्नाम वार्ष्विद्रवरुणास्तथा ॥ धर्मराजः कुबेरश्च वह्निविष्णुशिवौ तथा । श्रीमद्भागवतव्यासौ श्रीशुकः पृथुरेव च । ऋषभध्रुवौ ततः प्रोक्तौ नरनारायणस्तथा । हंसोथ यमुना चैव श्रीपुष्करप्रयागकौ ॥ कुरुक्षेत्रं तथा मायाक्षेत्रं साकेतकं तथा । वाराणसी द्वारिका च गोपीचन्दनमेव च ॥ ऊर्ध्वपुंड्रं तथा कांच्यवंतिकाक्षेत्रमेव च । जगन्नाथोथ नैवेद्यं विष्णुतीर्थं तुलस्यथ । शालिग्रामोथ बदरी सेतुरब्धिस्तथैव च ॥ काश्मीरं भारतं खंडं कालश्च मनसः स्थितिः । हिरण्यगर्भः सेनानीर्जननी जनकस्तथा ॥ प्रद्युम्नश्चानिरुद्धश्च फाल्गुनश्चोद्धवस्तथा । हनुमान्गरुडश्चैव सुदर्शनमथो रमा ॥ अष्टादशाक्षरो गीता वेदो गायत्रिका तथा । गवां कुलं च रुद्राक्षपंचाक्षरकमन्त्रकौ । शिवलिंगं भस्मधृतिर्बिल्ववृक्षः स्वयंपचिः । नवग्रहा हरेर्घस्रस्तर्कशास्त्रं च पुष्यभम् । कलिस्तुर्याश्रमश्चैव शतं चैते प्रकीर्तिताः । एषां पक्षे योजना मे कृता गुरुप्रसादतः । श्रीमद्भागवतस्याद्यश्लोकस्य सुधियो भृशम् । वक्ष्यामो योजनाहेतून्विचार्य निजया धिया । पौर्वापर्यविचारोत्र न कार्योहि मनीषिभिः । सर्वविघ्नविघातार्थं गणनाथस्य पूजनम् । कार्यारम्भे गणेशश्च पूजनीयः प्रयत्नतः । इत्युक्तेर्गणेशध्यानम् । 'सरस्वत्याः प्रसादेन सर्वं ज्ञानं प्रजायते ।' इति ज्ञानहेतुत्वेन तद्ध्यानम् । 'सर्वांधकारशमनो भास्करो विश्वपूजितः । इति सर्वांधकारशमकत्वेन हृदयांधकारमपि नाशयतीति तद्ध्यानमिति । यद्वा 'आरोग्यं भास्करादिच्छेदि'ति हेतोरपि तद्ध्यानम् ।' श्रीशंकरस्यापि सर्वकल्याणहेतुत्वाच्छिवरूपाज्ज्ञानमर्हतीत्यार्योक्तेश्च ज्ञानहेतुत्वात्तद्ध्यानमिति । विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु 'वाक्येषु च का त्वदन्या इति मार्कंडेयोक्तेः सर्वविद्याहेतुत्वात्तद्ध्यानमिति । 'सृजामि तपसा विश्वमिति' भगवदुक्तेस्तपसः परपुमर्थकारणत्वात्तद्ध्यानमिति । 'सत्संगतिः कथय किं न करोति पुंसामि'ति हरिभर्त्रुक्तेस्तद्ध्यानमिति । 'हरौरुष्टे गुरुस्त्राता गुरौरुष्टे न कश्चन । तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेदि'ति स्मृतेस्तद्ध्यानमिति । ओङ्कारस्य सर्ववाङ्मयकारणत्वेन ध्यानमिति । 'कर्मणैवाखिलं फलमि'त्युक्तेः कर्मैव ध्येयमिति । मत्स्यावतारेणापि हयग्रीवदैत्यहृतवेदानयनं हरिणा कृतं तद्द्रोहहतिश्च कृतातस्तद्ध्यानमप्यत्रोपयोग्यमेव कूर्मरूपस्यापि हरेर्मंदरधृतिपूर्वकममृतोत्पादनं कारितम् । श्रीमद्भागवतस्यापि परमामृतरूपत्वात्तदारब्धौ तद्ध्यानं युक्तमेवेति । श्रीनारदेनैव व्यासशोकापनोदनं कृतमतस्तद्ध्यानमिति । निजजनावनार्थं कर्तुमशक्यमपि करोति हरिरत एव हरिणा निजभृत्यभाषणरक्षणार्थं श्रीनृसिंहविग्रहोंगीकृतस्तद्ध्यानं तु सर्वथा कार्यमेव । धन्वंतरेः स्मृतेरेव सर्वार्तिशमकत्वान्ममाप्यंतरार्तिर्नश्यत्विति हेतोस्तद्ध्यानमिति । श्रीरामेण तु समुद्रे सेतुः कृतस्तत्कृपयाहमपि संसारसमुद्रेसेतुभूतं श्रीमद्भागवतं करोमीति तत्सिद्ध्यैतद्ध्यानं न्याय्यमेव । श्रीकृष्णस्य त्वत्र प्रतिपाद्यत्वात्तद्ध्यानं कार्यमेव । श्रीगंगा यथा त्रिलोकीं पुनाति तथा मत्त आविर्भूतं श्रीमद्भागवतं त्रिलोकीं श्रोतृवक्तृपृच्छकान्वा पुनात्विति तद्ध्यानमिति । ब्राह्मणानां सर्वामररूपत्वाद्ब्राह्मणार्चने सर्वार्चनमिति तद्ध्यानम् । श्रीवाराहेण सर्वाधारभूतपृथिव्युद्धारः सर्वोपद्रवकारी दैत्यश्च हतस्तद्ध्यानेन ममाप्युपद्रवो मा भूदिति युक्तं तद्ध्यानम् । श्रीवामनेन निजजनावनार्थं कपटरूपं धृत्त्वा दैत्या निरस्तास्तद्ध्यानेन ममाप्यबोधदैत्यो हतो भवत्विति न्याय्यं तद्ध्यानम् । श्रीपरशुरामेण भूयो भूयो दुष्टक्षत्रं नाशयित्वाऽधर्मोवितस्तद्ध्यानं ममापि भूयो भूयो ग्रन्थनिर्मितावालस्यादिकं नाशयत्विति योग्यं तद्ध्यानम् । श्रीबलदेवस्य शेषावतारत्वेन सर्पाधीशत्वाद्ग्रन्थनिर्माणावसरे मम सर्पादिविषधरसत्त्वभीतिर्माभूदिति तद्ध्यानम् । बुद्धरूपेण हरिर्वेदाद्दैत्यान्प्रच्याव्य निजभक्तेभ्यो देवेभ्यस्तन्मार्गं ददावतो ममापि स वेदार्थं बोधयत्विति तद्ध्यानम् । कल्किस्तु कलिदोषं नाशयत्यतो ममापि कलिसम्बन्धो माभूदिति तद्ध्यानम् । हयग्रीवस्य निःश्वासतो ब्रह्मयज्ञे वेदाविर्भावोऽभूदिति हेतोर्ममापि वेदार्थावबोधो भवत्विति तद्ध्यानम् । श्रीदत्तात्रेयस्तु ज्ञानिशिरोमणिरभूत्तद्ध्यानेन ममापि रचनाज्ञानं स्यादिति । कपिलस्मृतेः सांख्ये बुद्धिरप्रतिहतास्त्विति तद्ध्यानमिति सनकादिस्मृतेः कामादिपीडा नश्यत्विति तद्ध्यानं तेषां नैष्ठिकत्वात् ॥ गोवर्द्धनेन तु व्रजरक्षा कृता तस्य रक्षावत्स्वभावत्वान्मामपि स रक्षत्विति हेतोस्तद्ध्यानम् । श्रीराधायास्तु श्रीकृष्णस्यापि वशकर्त्रीत्वेन सर्वोत्कर्षवत्त्वान्ममापि सोत्कर्षं ददात्विति तद्ध्यानम् । वृन्दावनस्य तु साक्षाच्छ्रीकृष्णस्य नित्यालयत्वान्ममापि तद्भवत्विति तद्ध्यानम् । कलौ

तु हरिनामैव सर्वार्थसाधकत्वाद्ध्येयमिति तद्ध्यानम्। वायोस्सर्वाधारत्वेन सर्वजीवनहेतुत्वाद्ध्येयत्वम्। इन्द्रस्य सर्वदेवाधिपत्याद् ध्येयत्वम्। वरुणस्य सर्वजीवनहेतुजलाधीशत्वाद्ध्येयत्वम्। धर्मराजस्तु सर्वशास्ता सर्वेषां कर्मफलदाता चेति ध्येयः। सर्वनिधीशत्वात्कुबेरस्यापि तथात्वम्। वह्नेः सर्वदेवमुखत्वाद्ध्येयत्वम्। विष्णुशिवयोरभेदबुद्धेर्मोक्षहेतुत्वादभेदरूपेण तयोर्ध्यानं न्याय्यमेव। श्रीमद्भागवतस्य श्रीकृष्णवाङ्मयमूर्तित्वात्सर्ववेदसारत्वाच्च ध्येयत्वम्। व्यासस्तु साक्षान्नारायण एवातस्तद्ध्यानं कार्यमेव॥ श्रीशुकस्यैतच्छास्त्रप्रवर्तकत्वाद् ध्येयतास्त्येव। पृथोरादिराजत्वेन सर्वमर्यादास्थापकत्वात्पूज्यत्वं स्यादेव। ऋषभदेवस्य मोक्षहेतुपारमहंस्याश्रमप्रदर्शकत्वाद्ध्यानविषयतास्तीति॥ ध्रुवस्य तु सर्वोत्कृष्टपदस्थत्वात्सर्वदा स्थायित्वाच्च तथात्वम्। नरनारायणयोस्तु कामक्रोधादिजेतृत्वेन ध्येयतास्त्येव। हंसावतारस्य तु ब्रह्मणोपि मोहनिरासकत्वेन गुरुत्वादर्च्यत्वम्॥ यमुनायास्तु श्रीकृष्णकेलिस्थानत्वेन तटिनीषु मुख्यत्वाद्ध्येयता। पुष्करस्य सर्वतीर्थगुरुत्वाद् भुवो नेत्रत्वाच्चार्ह्यतास्त्येव। प्रयागस्य तु तीर्थराजत्वाद् ध्येयत्वम्। कुरुक्षेत्रस्य तु त्रिधा मुक्तिहेतुत्वेन ध्येयत्वम्। मायाक्षेत्रस्य तु मोक्षहेतुत्वाच्छ्रीगंगाया मुख्यस्थलत्वाच्च ध्येयता। श्रीसाकेतापरपर्यायायोध्याक्षेत्रस्य श्रीरामाविर्भावभूमित्वाद् ब्रह्मप्रियसरय्वधिकरणत्वाच्च सर्वदा ध्येयत्वमेव। श्रीकाश्या मरणादेव मोक्षदातृत्वेन ध्येयता श्रीविश्वेशनिवासभूतत्वाद्वा॥ श्रीद्वारिकायाः श्रीकृष्णराजधानीत्वेन सपरिकरस्य भगवतो निवासभूमित्वात्तथात्वम्। गोपीचंदनधृतेः पापिनोपि मोक्षं यांतीति ध्येयमेव तत्॥ उर्ध्वपुंड्रस्य सर्वकर्मसु धार्यत्वेन कर्मपूर्तिकरत्वाद्भगवत्प्रियत्वाच्च ध्येयता। कांचीद्वयस्यापि सप्तपुर्यंतर्गतत्वेन मुक्तिदत्वाद्ध्येयत्वम्। अवंतिकाया अपि श्रीकृष्णविद्याध्ययननगरत्वेन मोक्षहेतुत्वादर्ह्यता। श्रीजगन्नाथस्तु कलौ साक्षादेव प्रसिद्धस्सर्ववांछितप्रदश्चातो ध्येय एव सः। श्रीविष्णुनैवेद्यस्य त्वखिलपापहरत्वेन भक्ष्यत्वाद्ध्येयत्वम्। श्रीविष्णुचरणोदकस्य निखिलतीर्थरूपत्वादर्च्यतास्ति। श्रीतुलसीं विना दत्तमप्यन्नादि हरिर्न गृह्णात्यतस्तस्या हरिवल्लभात्वेन ध्येयतास्त्येव। शालिग्रामे सर्वदा विष्णोराविर्भावाद् ध्येयतैव। बदरीक्षेत्रस्याद्युनापि साक्षान्नरनारायणस्थितिमत्त्वाद्ध्येयत्वम्॥ सेतुदर्शनस्य ब्रह्महत्यानिवर्तकत्वेन रामेश्वराधिकरणत्वाद्वा ध्यानयोग्यता॥ समुद्रस्य तु सर्वतीर्थरूपत्वाद्रक्षआदिभ्यो लोकरक्षकत्वाच्च ध्येयता। काश्मीरमंडलस्य वाग्देवतायाः सर्वदा स्थलत्वादादिवराहाविर्भावभूमित्वाद्वा ध्येयता॥ भारतखंडस्य तु पुण्यक्षेत्रत्वेन ध्येयता। कालस्य सर्ववशित्वाद्ध्येयता। 'परो हि योगो मनसः समाधिरि'ति भगवदुक्तेर्मनः स्थितेःसर्वार्थसाधकत्वाद्ध्येयत्वम्। ब्रह्मणस्तु सर्वजगदुत्पादकत्वेन ध्यानगोचरता। कार्तिकेयस्यापि प्रज्ञावर्द्धकत्वाद्देवसेनापतित्वाद्वार्च्यतास्त्येव। जननीजनकयोस्तु चतुर्वर्गसाधनदेहदातृपालकत्वात्सर्वामररूपत्वाद्वा ध्यानयोग्यता। श्रीप्रद्युम्नस्य कामावतारत्वे नाखिलबलिभ्योबलवत्तरत्वाद्ध्यानविषयता। अनिरुद्धस्यापि चतुर्व्यूहांतर्गतत्वेन भगवद्रूपतया ध्येयता। अर्जुनस्य तु श्रीकृष्णस्यातीव वल्लभत्वात्पूज्यतैव। उद्धवस्य श्रीकृष्णमंत्रिषु प्रवरत्वाद्ध्येयत्वम्। हनुमतोऽतिबलवत्तरत्वेन तद्ध्यानं ममापि बलं करोत्विति ध्येयत्वम्। गरुडस्य तु भगवद्यानत्वादमृतनेतृत्वाच्चार्चनयोग्यता। सुदर्शनस्य भगवदायुधेषु मुख्यत्वाद्ध्येयत्वम्। श्रीलक्ष्म्यास्तु कटाक्षपातेन सर्वसंपद्धेतुत्वाद्ध्यानयोग्यता। अष्टादशाक्षरस्य सर्वमंत्रराजत्वाच्छ्रीकृष्णस्वरूपत्वाच्च तथात्वम्। श्रीगीतायाः सर्वोपनिषत्सारत्वात्साक्षात् श्रीमुखोक्तित्वाच्च ध्येयता। 'वेदो नारायणः साक्षादि'त्युक्तेः पुरुषार्थोपायाद्बोधकत्वाद्ध्यानगोचरता। अस्य पुराणस्य गायत्र्यर्थभूतत्वात्तद्ध्यानमुचितमेव। गवां कुलस्य सर्वदेवदैत्यनरादिपालकत्वाद्ध्येयत्वम्। रुद्राक्षस्य हरवल्लभत्वात्सर्वदेवमनुजेष्वभ्यर्हितत्वाच्च ध्यानगोचरता। पञ्चाक्षरमंत्रस्य तूपदेशं विनापि श्रेयोहेतुत्वादर्ह्यता॥ शिवलिंगस्य सर्वपुरुषार्थजनकत्वेन ध्येयता॥ भस्मधृतेस्तु शिवपूजनोपयोगित्वात्तथात्वम्॥ बिल्वस्य साक्षाच्छ्रीनिवासभूमित्वेनामृतोद्भूतत्वेन च ध्यानविषयता। स्वयं पाकस्य सर्वाचारेषु मुख्यत्वाद्ब्राह्मण्यापादकत्वाच्च ध्येयता। नवग्रहाणां जगत्सु दुःखहेतुत्वात्तद्ध्यानेन मम दुःखं माभूदिति तद्ध्यानम्। हरिवासरस्य सर्वव्रतेषु मुख्यत्वेन सर्वथा कार्यत्वाद्ध्येयत्वम्। तर्कशास्त्रस्य वादिवृंदमर्दकत्वेन तद्ध्यानान्मन्निर्मितशास्त्रे कश्चिद्वादं न कुर्यादिति तद्ध्यानम्। पुण्यः परकृतं हंति न तु पुण्यकृतं पर 'इत्युक्तेः सर्वकार्ये' साधकत्वात्तस्यर्क्षेषु प्रधानत्वाद्वा ध्यानम्। 'दुर्जनं प्रथमं वंदेदि'ति न्यायेन कलियुगस्य सर्वसुबुद्धिहरत्वात्तन्मे माभूदिति तद्ध्यानम्। संन्यासस्य तु मोक्षोपयोग्याश्रमत्वादेव तद्ध्यानमिति। अत्र पौर्वापर्यविचारो न कार्यो बहुव्याख्याने तात्पर्यत्वात्संगतिविचारस्याप्यत्र चिंता न कार्या। बह्वर्थे संगतिर्वाक्यैनैवालोच्या मनीषिभिः इत्यभियुक्तोक्तेः। अथ गणेशपक्षः। नत्वा लंबोदरं देवं व्याख्या भागवतस्य हि। आद्यश्लोकस्य विशदापक्षे गाणपते'कृता॥ १॥ कार्यारंभे गणेशश्च पूजनीयः प्रयत्नतः। इति मनसि निधाय व्यासः श्रीमद्भागवतारंभरूपकार्यादौ गणेशं प्रणमति। जन्माद्यस्येति।

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि॥ १॥

वयं तं गणेशं ब्रह्महत्या ब्रह्महत्या आदौ धीमहि। आदीत्यव्ययमादावित्यर्थे। 'मनसि हृशि हृच्छब्दो' वागीशेन प्रकीर्तित इत्यनेकार्थचिंतामणिः। गणेशस्य ब्रह्मरूपतात्वथर्वशिरस्युक्ता 'त्वं प्रत्यक्षं ब्रह्मासि त्वं ज्ञानमयो विज्ञानमयोसि। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति सर्वं जगदिदं त्वयि लयमेष्यतीति

तो'ति श्रुतेः। यतो यस्माद्गणेशात्स्वराडिंद्रः अर्थेषु समुद्रोद्भूतकामधेन्वादिपदार्थेष्वाद्यस्य समुद्रमंथनादिकारणस्यामृतस्य जन्माविर्भावमन्वयात्, जनेः प्रादुर्भावार्थकत्वाज्जन्मशब्द आविरर्थकः। 'स्वराण्नमुचिसूदन' इत्यमरः। यद्वा स्वराट् युधिष्ठिरो यतो गणेशादाद्यस्य सर्वादिकारणस्य श्रीकृष्णस्य जन्माविर्भावमन्वयात् प्राप। अनुपूर्वो या-प्रापणे ततो लङ्। युधिष्ठिरेण वनस्थेनापद्ग्रस्तेन कस्यचिद्दषेरुपदेशाद् गणेशार्चनं कृतं ततः श्रीकृष्णप्राप्तिस्ततश्चापत्त्यभाव एतच्च भविष्ये स्फुटम्। 'सामंतेशश्चचक्रवर्ती स्वराट् सम्राण्महाधिप' इति धरणिः। समुद्रमथनारंभे गणेशार्चनं न कृतं तत एव गिरिपातादिना सुरासुरविनाशो गिरेरधोगत्यादिरूपश्चोपद्रवोभूत्। ततो विष्णुना गणेशार्चनं कारयित्वा मथनमारंभितम्। 'विलोक्य विघ्नेशविधिं तदाच्युत' इत्यादिनाष्टमस्कंधे वक्ष्यति। 'अनाराध्य गणाधीशं नहि किंचित्प्रसिध्यती'ति भविष्येऽपि। ततोऽमृतादि प्राप। यन्निमित्तं यत् क्रियते तदेव तस्य हेतुः यथा 'स्वर्गकामो यजेते'त्यादौ स्वर्गकाम एव यजने हेतुस्तथामृतमेवात्राब्धिमथने कारणमिति पूर्वोक्तमनुसंधेयम्। कीदृशः स्वराट् इतरतः सकाशादभिज्ञः। 'इः कामे कामनायां चे'त्यनेकार्थोक्तेः, इं कामं तरति जयतीतीतरो विष्णुस्तस्मादितरतः। तस्य नित्यं ब्रह्मचर्यदत्त्वादितरत्वम्। तदुक्तं जैमिनीये 'यद्यहं ब्रह्मचर्येण न भग्नो भूतले तदा। तेन मे सुकृतेनाद्य पार्थस्यायातु वै शिरः॥ यैर्नीतं ते पतंत्वद्य भिन्नशीर्षा ममाज्ञया॥' इति। किञ्च दुर्वासोदर्शनार्थिनीभिर्गोपीभिरप्येतद्यमुनातरणावसरे 'कृष्णाज्ञयैतद्ब्रह्मचर्यमनुभूतं यमुनामार्गदानेन हेतुने'ति गोपालतापिन्याम्। गर्गसंहितायां चैतत्स्पष्टतरम्। तथा वक्ष्यत्यपि श्रीदशमे 'आत्मन्यवरुद्धसौरत' इति। तथा चेतरतो विष्णोरभिज्ञः प्राप्तशिक्षः। तच्छिक्षा च 'लोभः कार्यो न वो जातु कामं रोषस्तु वस्तुषु' इत्यादिनाष्टमस्कन्धे प्रकटीभविष्यति। यद्वार्थेषु इतरतः इता दूरीभूता रतिः प्रीतिर्यस्य स तथा, समासांतोऽत्र डः। 'तस्मिन्बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया।' इत्यग्रे वक्ष्यमाणत्वात्। युधिष्ठिरपक्षे इतरतः शत्रोरभिज्ञस्त्रस्तः। 'इतरो रिपुनीचान्यशिवविष्णुगुहेषु च' इति सर्वार्थचिंतामणौ। ज्ञा त्रासेप्यनेकार्थत्वाद्धातूनाम्। यत्कोर्थः यं सूरयो मुह्यंति ध्यायन्ति मुह वैचित्ये। इह चित्यते संज्ञायतेनेनेति चित्तं ध्यानं विशेषेण चित्तं विचित्तं तस्य भावो वैचित्त्यमित्यर्थान्मुहि ध्यानार्थो भवतीति। 'पादांबुजध्यानवशेन यस्य विघ्नांधकारा विलयं प्रयांती'ति जातकाभरणोक्तेः। कस्मै कवये कवित्वाय, भावप्रधानो निर्देशः। यत्र यस्मिन्गणेशे ध्याते सतीति शेषः। त्रयाणां शोकमोहविघ्नानां सर्गः स्थितिर्मृषा। 'सृष्टौ स्थितौ च संहारे सर्गोऽध्यायेऽथ निश्चये' इति कोशात् स्थितावपि सर्गोस्ति। शोकं इष्टविनाशजं दुःखम्। मोहोऽज्ञानम्, विघ्नस्तु कार्योत्पत्तिप्रतिबंधक उपद्रवः। कथं यथा तेजोवारिमृदां विनिमयो व्यत्यासो मृषेति दृष्टांतः। किंभूते यत्र तेने तेत्वं करित्वं नयति प्राप्नोति तच्छिरोधारणेनेति तेनस्तस्मिंस्तेने। डोऽत्र कर्मणि नयतेः। अत्रापि भावप्रधानो निर्देशः। 'ते करी' स्मृत इति सौभरिप्रोक्तनाममालायां गजमुख इत्यर्थः। कीदृशं तं स्वेनान्यत्र विद्यमानेन धाम्ना तेजसा परं सर्वोत्कृष्टम्। आदिपूज्यत्वात्सर्वदेवपराभवकर्तृत्वाच्च। आदिपूज्यत्वं तु सर्वत्र प्रसिद्धमेव। सर्वदेवपराभवकर्तृत्वं शिवपुराणे स्पष्टम्। पुनः कीदृशं सत्यं ब्रह्मरूपत्वात्। पुनः सदा नित्यं निरस्तोपास्तः कुहको विघ्नसमूहः स्तवपाठकानां येन स तथा। 'सर्वे विघ्नाः शमं यांति गणेशस्तवपाठतः।' इत्यभियुक्तोक्तेः। इति गणेशपक्षः॥ १॥

अथ सरस्वतीपक्षः। वयं तत्सारस्वतं धाम हृदा धीमहि। तत् किं यस्यान्वयात्संबंधात्स्वराट् दरिद्रोप्यभिज्ञ ईश्वरो भवति। 'वंशानुगतिसंबंधे पदानां योजने तथा। पदार्थसंगतौ प्राप्तौ संसारे सेवनेऽन्वयः॥' इति महीदेवः। 'स्वराडि वनिपानखनित्रमिन्द्र' इत्यत्र स्वराट्पदं दरिद्रपरं वक्ष्यति। अभितो ज्ञापयति नियोजयति सर्वानित्यभिज्ञः। ज्ञा नियोगेऽतो डः। सरस्वतीप्रसादादाप्तविद्यः सर्वान्स्वे स्वे कर्त्तव्ये नियोजयतीति तं पृष्ट्वैव सर्वे स्वं स्वं कार्यमारभंत इति भावः। यद्वाऽभिज्ञो नारदः स्वराट् स्वरमटति जानातीति स्वराट् स्वरज्ञानवानभूदित्यर्थः। एतच्च गर्गसंहितादावतिस्पष्टम्। यत्सारस्वतं धाम आदिकवये बृहस्पतये ब्रह्म ज्ञानं तेने। 'ब्रह्म तत्त्वे तपोभेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे'ज्ञाने वेदे च भूमनि॥' इति मेदिनी। 'दत्तं ते निर्मलं ज्ञानं कुमतिध्वंसकारकम्।' इति स्कांदे बृहस्पतिं प्रति भारतीवाक्यात्। यस्मिन्ब्रह्मणि ज्ञाने सूरयः शास्त्रज्ञा अपि मुह्यंति ज्ञानस्य शास्त्रेष्वनेकधा कथनात्किं द्वैतमेव श्रेष्ठमुताद्वैतमिति निश्चयं नाधिगच्छन्ति। यत्र सारस्वतधामध्याने त्रयाणां जाड्यास्मृत्यस्फूर्त्तीनां सर्गः स्थितिर्मृषा। 'अस्फूर्त्यस्मृतिजाड्यानि नश्यन्ति यद्विचिंतनात्। तां देवीं शारदां वन्दे सदा सुरवरार्चिताम्॥' इत्यभियुक्तोक्तेः। यथा तेजोवारिमृदां विनिमयो विपर्यासो मरुमरीचिकादि मृषेति। किञ्च यत्सारस्वतं धाम आद्यस्य ब्रह्मणः। 'इः कामे कामनायां च चन्द्रे सांबादिषु तथा।' इति कोशात् इना चन्द्रेण तीर्यत उपमीयते इतीतरं मुखं यद्वा इं चन्द्रं तरत्युल्लंघयति शोभयेतीतरं तस्मादितरतो मुखादित्यर्थः। धातूनामनेकार्थत्वात्तरतिरत्रोपमार्थः। तथा च ब्रह्ममुखादिति लब्धं जन्माप प्राप। 'आस्याद्वाणि'ति तृतीये वक्ष्यमाणत्वात्। किंभूतं धाम सदा सत्यं कालत्रये विद्यमानम्। 'नित्यसिद्धां ब्रह्मरूपां वन्दे देवीं सरस्वतीम्।' इति तत्स्तवोक्तेः। पुनः परं ब्रह्मादिसेव्यं 'या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वंदिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहे'ति संहितोक्तेः। पुनः स्वेन निजेन धाम्ना प्रकाशेन अर्थेषु वाच्येषु निरस्तोऽपास्तः कुहकोऽस्फूर्तिलक्षणो येन तत्तथा। यद्वाऽर्थेषु महावाक्यार्थेषु निरस्तः कुहकोऽज्ञानरूपो येन तत्तथा। तथा च ज्ञानं दत्त्वा मोक्षं ददातीति भावः। 'मोक्षदे मुक्तिमार्गे' इति रुद्रयामलोक्तेः। सरस्वत्या वागधिष्ठातृदेवतात्वेन वागप्रतिहता मे भवत्विति ग्रन्थादौ तद्ध्यानमुचितमेवेति प्रतीयतेऽस्माकमत्र। इति

सरस्वतीपक्षः ॥ २ ॥ ❀ ❀ अथ सूर्यपक्षः । सूर्य एव सर्वजगतः प्रकाशकत्वाद्धितकरः । किं चास्य पुराणस्यापि 'कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ।' इत्यग्रे वक्ष्यमाणत्वेन सूर्यरूपत्वमस्ति । तच्चान्तस्तमोनाशकत्वसाम्यात्समञ्जसम् । निखिलश्रुत्यर्थपंकजोद्बोधकत्वाद्गायत्र्यर्थवर्णकत्वाद्वा बोध्यम् । गायत्र्यामपि सूर्य एव स्तूयते । किंच गायत्रीरूपत्वकथनेन द्विजस्यैवास्याध्ययनपाठादावधिकारो न त्वत्रैवर्णिकस्येत्यपि सूचितं भवति । सूर्यस्य बहिरंतस्तमोनाशकत्वात्सशिष्यो व्यासस्तमेव ध्यायति जन्माद्यस्येत्यादिना । वयं तं सूर्यं हृदा धीमहि । तं कम् । यतः सूर्यादस्य जगतो जन्मादि भवति । 'सूर्याद्भवन्ति भूतानि सूर्येण पालितानि सूर्यं प्राप्नुवंती'ति सूर्योपनिषदि । आदित्यहृदयेपि 'यन्मण्डलं विश्वसृजं प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम् ।' इत्युक्तम् । य आदि सनातनं ब्रह्म वेदं कवये याज्ञवल्क्याय तेने अश्वरूपेण प्रकाशितवान् । एतच्च द्वादशे स्फुटीभविष्यति । यश्च तेजोवारिमृदां तेजसां वारीणां मृदां धाम्नाश्रयत्वेन इतरतः इता ज्ञाता रतिः क्रीडा यस्य स तथा प्रसिद्ध इत्यर्थः । तेजसामाश्रयत्वं तु तत्र प्रमाणानपेक्ष्यमेव । वार्याश्रयत्वं तु 'आदित्याज्जायते वृष्टिरि'ति स्मृतेः । वक्ष्यत्यपि 'यथैव सूर्यात्प्रभवन्ति वारः पुनश्च तस्मिन्प्रविशन्ति काले ।' इति चतुर्थे । द्वादशेपि 'अपामादानविसर्गाभ्यामिमां लोकयात्रामनुवहती'ति । रविकरा एव घनाकारेण परिणता वर्षंतीति । यथा घनोर्कप्रभवोऽर्कदर्शन इति वक्ष्यमाणत्वात् । मृच्छब्देन तदुपलक्षितं जगत्तस्य धाम्ना प्रकाशकत्वेनेत्यर्थः । यद्वा मर्दयति सर्वं जगदिति मृद्धर्मराजस्तस्य धाम्ना जनकत्वेनेत्यर्थः । किंच यस्मिन्सूर्ये त्रयाणां प्रातर्मध्यसायानां सर्गो रचना मृषा । प्रातरादयः कालास्तु लोकापेक्षयैव न तु तत्र ते संतीति भावः । अर्थेष्वभिज्ञः स्वमनोरथपूर्तिकामो नायं सदाऽन्वयात् सेवते । किंच सूरयः शास्त्रतात्पर्यज्ञा ब्रह्माद्या यत् यं सदा मुह्यंति । मुह वैचित्त्ये, वैचित्त्यं मोहो ध्यानं च विशेषेण चिन्त्यते संज्ञायते ध्येयं येन तद्विचित्तं ध्यानं तस्य भावस्तथा । 'ब्रह्मेन्द्रनारायणरुद्रवन्दितः स नः सदा यच्छतु मंगलं रविरि'ति भविष्योक्तेः । यद्वा मुह्यन्ति कीर्तयन्ति धातूनामनेकार्थत्वात् । 'एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कीर्तयन्ति सुरश्रेष्ठ देवं नारायणं रविम् ॥' इति तत्रैवोक्तेः । किञ्च यः सूर्यो यथा यथावद्विनिमयः नितरां मीयते क्षिप्यते शरीरमनेनेति निमयो रोगसमूहः । निपूर्वडुमिञ् प्रक्षेपणेऽप्रत्ययः साधने । विगतो निमयो यस्मात्स विनिमयः । 'आरोग्यं भास्करादिच्छेदि'ति स्मृतेः । 'वाताश्मरीदुर्नामत्वग्दोषमहोदरप्रमेहांश्च । ग्रहणीभगंदरमुख्यान्महारुजस्त्वमिन संहरसी'त्यार्यास्तवोक्तेश्च । 'कुष्ठव्याधिस्तथा दद्रुरोगाश्च विविधाश्च ये । जपतस्तस्य नश्यंति भक्त्या शृणु तदर्जुन ॥' इति भविष्ये श्रीकृष्णोक्तेश्च । किंभूतं स्वेनान्यनिरपेक्षेणैव निरस्तः कुहकोन्धकारो येन स तथा तम् । किंच यः सूर्यः स्वराट् स्वयं प्रकाशः न त्वन्येन केनचित्प्रकाशितः यच्च येनेद्धः सूर्यस्तपतीति सूर्यस्तपति यद्भयादिति च श्रुतौ । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि'ति स्मृतौ चोक्तं तत्त्वाधिकारिकदेवतापरम् । अत्र तु साक्षाद् ब्रह्मरूपसूर्यो ध्येयोऽभिप्रेतः । पुनः किंभूतं सत्यं त्रैकालाबाध्यम् आत्मरूपत्वात् । 'सूर्य आत्मा जगतस्तस्थुषश्चे'ति श्रुतेः । पुनः परं सर्वोत्कृष्टं ब्रह्मादिपूज्यत्वात् । तदुक्तमादित्यहृदये 'आदित्यमर्चयेद् ब्रह्मा आदित्यमर्चयेच्छिवः ।' इति । यद्वा पाति सर्वमिति पं जलं तद्राति ददातीति परस्तम् । 'स्वगोभिर्मोक्तुमारेभे भूम्या उदमयं वसु ।' इति श्रीदशमे वक्ष्यमाणत्वात् । इति सूर्यपक्षः ॥ ३ ॥ अथ शिवपक्षः । शिवरूपाज्ज्ञानमहमित्यार्यास्तवोक्तेश्शिवस्य ज्ञानदातृत्वश्रुतेर्व्यासस्तं ध्यायति । वयं तं शिवं सदा हृदा धीमहि । तं कं यत्र त्रयाणां नेत्राणां सर्गो रचनाऽमृषा । यद्वा त्रयाणां ब्रह्मादीनां सर्गः प्रेरणममृषा सत्यः । 'यस्याज्ञया जगत्स्रष्टा विरिंचिः पालको हरिः । रुद्रः संहारकर्त्ता च नमस्तस्मै पिनाकिने ॥' इति स्मृतेः । 'सर्गोध्याये च निर्मोक्षे प्रेरणे सृष्टिहानयोः । स्वभावे गमने ज्ञाने हिंसनेपि च कीर्तितः ॥' इति महीदेवोक्तेः । यद्वा त्रयाणां त्रिपुरस्थदैत्यानां सर्गो हिंसनममृषा सत्यः । तेजोवारिमृदां यथाऽविनिमयः स्वभावावस्थितिरासृष्टेरमृषा च, पुनर्यस्यान्वयादेहादाद्यस्याग्रपूज्यस्य गणेशस्य जन्माभूत् । पार्वतीमलादुत्पत्तिर्गणेशस्य कल्पांतरविषया बोध्या । गणेशस्यादिपूज्यत्वं तु भगवदर्पितमालाधृतेरेव जातमेतच्च ब्रह्मवैवर्ते स्पष्टम् । यः शिव आदिकवये पाणिनये ब्रह्म वेदैकदेशं व्याकरणं तेने । 'येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥' इति स्मृतेः ॥ पाणिनये शिव एव ददाविति अंगांगिनोरभेदोपचारात् ब्रह्मैकदेशेपि ब्रह्मशब्दप्रयोगः । एकदेशत्वे मानं तु 'मुखं व्याकरणं स्मृतमि'ति स्मृतिः । यद्वा 'मुखमर्द्धं शरीरस्य सर्वं वा मुखमुच्यते ।' इति कामंदकोक्तेर्व्याकरणं वेदमुखत्वाद्वेद एवेति ध्येयम् । यः शिवः स्वराट् स्वयं प्रकाशः संगीताचार्यश्च संगीताचार्यत्वं ग्रंथांतरे स्पष्टम् । स्वयंप्रकाशत्वं तु सर्वेश्वरत्वादेवेति । यश्चेतरत इतराणां कामतरणशीलानां योगिनामर्थेषु कर्तव्ययमनियमादिष्वभिज्ञः नियोजकः इत्थं समाधिसिद्धये यमा इत्थं नियमाश्च कार्या इत्येवं प्रेरकः । ज्ञा नियोगे डप्रत्ययः । यस्मिन् शिवे सूरयो भृग्वादयोपि तदाचरणनिंदनादिना मुह्यंति । एतच्चतुर्थे दक्षोपाख्याने स्फुटीभविष्यति । यद्वा यस्मिन्व्याकरणे सूरयोऽन्यशास्त्राभ्यासेन कथंचन निपुणा अपि मुह्यंति । शब्दापशब्दापरिज्ञानात् क्लिश्यंति । अत एवोक्तमभिज्ञैः 'यद्यपि बहुधाधीतं तथापि व्याकरणं पठनीयम् । शब्दोऽशब्दो मा भूत्सकलं शकलं शकृत्सकृत् ॥' इति । किंच 'वैयाकरणकिरातादपशब्दमृगाः क यांति संत्रस्ताः । नटभटगणकचिकित्सकमुखविवरगह्वराणि यदि न स्युरि'त्यप्येतदभिप्रायेणैवोक्तम् । अथ च व्याकरणाध्ययनं विनान्यशास्त्राध्ययनस्याधिकार एव न संभवति । तदुक्तं 'यो वेद वेदवदनं सदनं हि सम्यग्ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम् । यस्मादतः प्रथममेतदधीत्य धीमाञ्छास्त्रान्तरस्य भवति श्रवणेऽधिकारी ॥' इति ॥ तथा च श्रुतिः "तस्य वाग्वधो भवती"ति श्रुतेर्व्याकरणं

विनान्यशास्त्राध्येतु दोषमप्याह। तस्मादादाविदमेवाध्येतव्यम्। किंच 'अनधीत्य शब्दशास्त्रं योन्यच्छास्त्रं समीहते बालः। सोऽहेः पदानि गणयति निशि तमसि जले चिरगतस्य ॥' इति। किंभूतं शिवं परं सर्वनियंतारं 'ब्रह्मादयो यत्कृतसेतुपाला' इति वक्ष्यमाणत्वात्। किंभूतं व्याकरणं परं परप्रयोजनकत्वात्सर्वशास्त्रश्रेष्ठम्। ननु किं व्याकरणप्रयोजनं तत्राह 'रक्षोहागमलध्वसंदेहाः प्रयोजनमि'ति भाष्यम्। रक्षार्थं वेदानामध्येयं व्याकरणं लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति, ऊहः खल्वपि न सर्वैर्लिंगैर्न च सर्वाभिर्विभक्तिभिर्वेदे मंत्रा निगदितास्ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः, तान्नावैयाकरणः शक्नोति विपरिणमयितुं तस्मादध्येयं व्याकरणम्। आगमः खल्वपि 'ब्राह्मणेन निष्कारणो धर्मः 'षडंगो वेदोऽध्येयो ज्ञेयश्चे'ति। प्रधानं च षडंगेषु व्याकरणं प्रधाने च कृतो यत्नः फलवान्भवति। लध्वर्थं चाध्येयं व्याकरणं ब्राह्मणेनावश्यं शब्दा ज्ञेया इति। न चांतरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुम्। असंदेहार्थं चाध्येयं व्याकरणं याज्ञिकाः पठंति 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेते'ति। तस्यां संदेहः स्थूला चासौ पृषती च स्थूलानि वा पृषंति यस्याः सेयं स्थूलपृषतीति। तन्नावैयाकरणः स्वरतोऽध्यवस्यति, यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिरथांतोदात्तत्वं ततस्तत्पुरुष इति भाष्यम्। यद्वा किंभूतं व्याकरणं परं सर्वोत्कृष्टपुरुषार्थचतुष्टयापादकत्वात्। यथाहि निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्चेत्यध्ययनविधिर्व्याकरणाध्ययनतां गमयति सांगवेदाध्ययनपरोयं नित्यो धर्मः संध्योपासनादिवदित्यर्थः। षट्स्वंगेषु प्रधानं व्याकरणं पदपदार्थज्ञानस्य व्याकरणमूलत्वात्। वाक्यार्थज्ञानस्य च तद्धेतुकत्वादिति धर्मसाधनता। अथार्थसाधनतामाह। 'यो वा इमां पदशः स्वरशो वाचं विदधाति स आर्त्विजीनो भवति।' इति बोधयति श्रुतिर्याजने यजने च विदुष एवाधिकारम्। 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' इति स्मृतिश्च। अध्यापनं ब्राह्मणस्य वृत्तिः तन्निर्वाहश्च शब्दज्ञानाधीनः न ह्यशब्दज्ञं शिष्याः समुपगच्छंतीति शब्दज्ञानं व्याकरणं विना लघुनोपायेन न संभवति शब्दानामानंत्यात्। प्रतिपदपाठस्याशक्यत्वात्। अथ कामसाधनतामाह 'एकः शब्दः सम्यग्ज्ञातः सुष्टु प्रयुक्तः स्वर्गे लोके कामधुग्भवती'ति कामसाधनतां बोधयति। साधुशब्दप्रयोगस्य स्वर्गहेतुतावगमात्। अथ मोक्षसाधनतामाह 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती'ति श्रुतिः। किंच 'तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते। तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ॥' इति। किंच ध्वनिविशेषावच्छिन्नं ब्रह्मशब्दवाचकं व्यक्तिविशेषावच्छिन्नं ब्रह्मशब्दवाच्यमिति। एवं सति वेदांतेन सह सिद्धांतैक्यान्मोक्षहेतुत्वं स्फुटमेवेत्यलमतिप्रसंगेन। किंच वेदांगत्वादस्याध्ययने द्विजेतरानधिकार एव। पुनः स्वेन धाम्ना प्रकाशेन निरस्तः कुहकोऽपशब्दोच्चारणरूपो येन तत्तथा वाक्छुद्ध्यापादकमित्यर्थः। शिवपक्षे निरस्तोऽपास्तः कुहकोऽघलक्षणः स्वनामोच्चारकाणां येन तम्। 'यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हन्ति।' तदिति वक्ष्यमाणत्वात्। यद्वा निरस्ताः कुहका वृकांधकप्रभृतिदैत्या येन तम्। पुनः सत्यं कालत्रयेप्येकरसम्। 'देवाह वै रुद्रमपृच्छन् को भवानिति सोब्रवीदहमेकः प्रथममासीत् वर्त्तामि च भविष्यामि च।' इति श्रुतेः। द्वितीयपक्षे सत्यं शब्दसत्यत्वापादकम्। 'उपायाः शिक्षमाणानां बालानामुपलालना। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥' इति भाष्योक्तेरिति। ननु किं नाम व्याकरणत्वं, शब्दान्वाख्यापकत्वे सति व्याख्याविशिष्टसूत्रवार्तिकभाष्यान्यतमत्वं व्याकरणत्वम्। केवलविशेषणोपादाने कोशादावतिव्याप्तिस्तेषामपि शब्दान्वाख्यापकत्वात्। केवलविशेष्योपादाने सूत्रादीनां तस्याच्छब्दानां तन्न स्यादत उभयोपादानं सूत्रवार्तिकभाष्यान्यतमत्वं तत्त्वमित्युक्ते शेखरादिग्रंथानां व्याकरणत्वं न स्यादतो व्याख्याविशिष्टेति विशेषणम्। सूत्रत्वं च 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥' सारवदिति सिद्धांतरूपमात्रस्याभिधायकम्, विश्वतोमुखं ज्ञापनीयनिपातनीयानेकार्थसूचकम्, अस्तोभमपरिचितार्थपदरहितम्। अनवद्यमप्राकरणिकत्वदुर्बोधत्वाविकलत्वविसंधिकत्वादिदोषरहितमिति। वार्तिकत्वम् 'उक्तानुक्तद्विरुक्तानां विचारो यत्रिबंधनम्। हेतुभिर्यत्प्रमाणं स्यादेतद्वार्तिकमुच्यते ॥' यद्वा वृत्तिकारेण कृतं वार्तिकं वृत्तिश्च स्फुटत्वेन सूत्रस्थपदविवरणम्। भाष्यत्वं च 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः। स्वपदानि च वर्ण्यंते भाष्यं भाष्यविदो विदुः ॥' इति शिवपक्षः ॥ ४ ॥ अथ दुर्गापक्षमत्र व्याख्यास्यामः ॥

अथ गुरुपक्षमाह। वयं तं गुरुं सदा हृदा धीमहि। तं कम्। यतो यस्य गुरोरन्वयात्सेवनादर्थेषु धर्मादिचतुष्केषु सर्वपदवाक्येषु वाऽभिज्ञो भवति। 'चतुर्वर्गपरिज्ञानं शब्दार्थज्ञानमेव वा। गुरुसेवनतो नृणां भवेदेव न संशयः ॥' इति 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैतेऽकथिता ह्यर्थाः प्रकाशंते महात्मनः ॥' इति श्वेताश्वतरोक्तेश्च। स्मरणात्। किंच यत्र गुरौ त्रयाणां ब्रह्मविष्णुरुद्राणां सर्गोऽमृषा। 'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।' इति स्मृतेः। कथं यथाऽविनिमयो वस्तुनः स्वाभाविकरूपममृषा। यश्च गुरुः तेजोवारिमृदामेतदुपलक्षितदेहानामाद्यस्य निदानस्य कर्मविशेषस्य परं कारणं कर्तारमर्थाज्जीवं प्रति ब्रह्म ज्ञानं तेने। 'अखंडमंडलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥'

१. षडंगानि च–'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणम्। छंदसां लक्षणं चैव षडंगो वेद उच्यते ॥' इति।

